इत्यलमतिप्रसङ्गेन। अन्ये अन्यवादिनः उभौ साङ्ख्ययोगौ अनुवादिनः तदुक्तस्यार्थस्यानुवादितार इत्यर्थः अनीश्वरशब्दवाच्यैः पद्मासनादिभिर्देवैर्जगतस्सेश्वरतां ब्रुवाणः कश्चिदपि वादी न सम्भवति ब्रह्मादीनामनीश्वरत्वं श्रुतिपुराणेषु श्रूयते। "आत्मा-ह्यनीशस्सुखदुःखहेतोः ह्यनीशश्चात्मा बध्यते भोक्तृभावात्। तयोरन्यः पिप्पलं स्वाद्वनत्ति अनश्नन्नन्यो अभिचाकशीति॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोकः"॥ इति। त्रिपुरदाहे। "अहमेव पशूनामधिपतिरसानीति। स्वतस्सिद्धं पतित्वम्मे युष्माकं पशुतापिच। पशवोहि वयं सर्वे सदेवासुरमानुषाः। पशवस्त्वस्मदादयः"। इति। आदित्यपुराणे। "ब्रह्माद्यास्स्थावरान्ताश्च पशवः परिकीर्तिताः। पशूनामेव सर्वेषां प्रोक्तमेतन्निदर्शनम्॥ स एव बद्ध्यते पाशैस्सुखदुःखाशनः पशुः। लीलासाधनभूतोयमीश्वरस्येति सूरयः॥ अज्ञो जन्तुरनीशोयमात्मनस्सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥ ब्रह्मादयः पिशाचान्ताः किं मे कर्मातिवर्तिनः। इच्छया देहनिर्माणमिन्द्रजालोपमं विदुः॥ अणिमादिगुणैश्वर्यवशीकारानतिक्रमात्। विश्वरूपं दधद्विष्णुर्दधीचेन महर्षिणा। युद्ध्यता समुपालब्धस्तद्रूपन्दधता स्वयम्। स्वभावविमलो यद्वत्सर्वानुग्राहकश्शिवः॥ स्वभावमलिनास्तद्वदात्मानो जीवसंज्ञिताः। अन्यथा संसरन्त्येते नियमान्न कथं शिवः॥ तस्मादनादिस्सर्वज्ञः परिपू-

र्णस्सदाशिवः । अस्ति नाथः परित्राता" । इत्यादयः अनीश्वरेण सेश्वरतां ब्रुवाणः स्ववचनादेव मे माता वन्ध्येति वत्पराहन्यते नहि नारायणेन सब्रह्मकं ब्रह्मणा वा सनारायणमिति सम्भवति ॥ ८ ॥

शिवैकवाच्यतामेवं प्रतिपाद्येश्वरश्रुतेः । तत्प्रवृत्तिनिमित्तस्य नमश्शेपित्वहेतुताम् ॥ ऐश्वर्यस्य वदन्वक्ति नमश्शेषित्वमीशितुः । स्पष्टं त्रयोदश श्लोकैश्श्रुतिस्मृतिपुरस्सरम् ॥

**ऐश्वर्यमग्र्यमनुपाधिनिबन्धनन्ते**
**यद्भूतनाथ नमसामपि पात्रमेकम् ।**
**तत्प्रायशश्श्रुतिषु दुर्लभमेव वाक्य-**
**मुक्त्वा नमो भवति यत्र भवत्प्रसङ्गः ॥ ९ ॥**

हे भूतनाथ अग्र्यं श्रेष्ठं अनुपाधिनिबन्धनं किन्तु स्वतस्सिद्धं तथा च श्रुतिः । "य ईशे अस्य जगतो नित्यमेव नान्योहेतुर्विद्यते ईशनाय" । ब्रह्मादिदेवतान्तराणामैश्वर्यन्तु त्वदाराधनजनितधर्मोपाधिनिबन्धनम् । तथाच । श्रूयते । "तव श्रिये मरुदो मर्जयन्त रुद्र यत्ते जनिम चारु चित्तं पदं यद्विष्णोरुपमन्निधायि तेन पासि गुह्यन्नामगोनाम्" । इति । ब्रह्मादयो देवाश्श्रियं लब्धुं लिङ्गाराधनं कृतवन्त इति श्रुतेरर्थः । तथा च ब्रह्मकैवर्ते । "रौद्रन्तदभ्यर्च्यहिलिङ्गमादौ शिलामयञ्चारु हरिस्तु भक्त्या । सुदुर्लभं वैष्णवमाद्यमग्र्यमवाप्तवानेष परं पदं यत्"॥

पराशरपुराणेपि। "रौद्रं लिङ्गं महाविष्णुर्भक्त्या शुद्धं शिलामयम्. चारु चित्रं समभ्यर्च्य लब्धवान्परमं पदम्। ब्रह्मा सर्वजगत्कर्ता यस्य लिङ्गार्चनेन तु। भारतीमाप्तवानाशु स पूज्यस्सर्वचेतनैः। यस्य लिङ्गं समभ्यर्च्य मरुतस्सकला अपि। लब्धवन्तश्श्रियं पूर्णाम्"। इति। तथा च। शिवरहस्ये। "इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा। विष्णुत्वं प्राप्तवांस्तेन धाम चैकं सनातनम्। ब्रह्मा पूजयते नित्यं लिङ्गं शैलमयं शुभम्। तस्य संपूजनात्तेन प्राप्तं ब्रह्मत्वमुत्तमम्"। इति। "कस्यान्यस्य सुरैर्लिङ्गं सर्वैर्माहेश्वरं विना। अर्च्यतेर्चितपूर्वं हि ब्रूहि यद्यस्ति मे श्रुतिः। यस्य ब्रह्मा च विष्णुश्च त्वञ्च शक्र सहामरैः। पूजयस्व सदा लिङ्गं तस्माच्छ्रेष्ठतमो हि कः"। इति। आनुशासनिकेपर्वणि। "जन्मकर्मतपोयोगस्तयोश्चतव पुष्कलः। आभ्यां लिङ्गेर्चितो देवस्त्वयार्चायां युगेयुगे। देवदेवस्त्वचिन्त्यात्मा अमेयो विष्णुसम्भवः। सर्वभूतभवं ज्ञात्वा लिङ्गेर्चयति तं प्रभुम्। आत्मयोगात्तमीशानं शास्त्रयोगाच्च शाश्वदम्। एवन्देवायजन्तो हि सिद्धाश्च परमर्षयः। प्रार्थयन्ते परे लोके स्थानमेव हि शाश्वतम्। कृष्ण एव हि यष्टव्यो यज्ञ एष सनातनः। सर्वभूतभवं ज्ञात्वा लिङ्गेर्चयति यः प्रभुम्। तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः। पूजयेद्विग्रहं यस्य लिङ्गं स्थाप्य महात्मनः। तस्माद्विजयिता नित्यं महतीं श्रियमश्नुते"। इति। द्रोणपर्वणि। "ब्रह्मणस्सृष्टिकर्तृत्वं विष्णोर्दानवमर्दनम्॥ स्वर्गाधिपत्यमिन्द्रस्य

शिवपूजाविधेः फलम्"। इति। पाद्मपुराणे। "पुरास्वायम्भुवे प्राप्ते श्वेतरूपी जनार्दनः। सह लक्ष्म्या महाभागश्चकारपरमं तपः॥ पुत्रकामस्समुद्दिश्य ध्यायमानो महेश्वरम्। देवदारुवने लिङ्गं स्थापयामास भक्तितः"॥ इति। वामनपुराणे। "शिवस्य पूज्यते लिङ्गं सर्वैर्देवासुरैर्नृभिः। शिवेन पूजितः को वा वदन्तु प्रतिवादिनः॥ स्वनाम्ना ब्रह्मणा लिङ्गं मया कृष्णेश्वरं मुने। सर्वापेक्षितसिद्ध्यर्थं वाराणस्यां प्रतिष्ठितम्॥ ओं नमोवासुदेवाय शिवशास्त्रावतारिणे। शिवलिङ्गार्चनव्यक्तचेतसे शिवजन्मने॥ यथार्थवचसानेन योमां स्तोतुं समुद्यतः। तस्याहं सुलभो व्यास नान्यस्याब्दशतैरपि॥ ब्रह्मात्र लिङ्गे हरिरत्रजातस्सुरासुराश्चेदमिहार्चयन्ति"। इति। सनत्कुमारसंहितायां। "तथापि देवमीशानं पूजयामि सनातनम्। नैव पश्यन्ति तं देवं मायया मोहिताजनाः॥ ततोहं [redacted]ात्मनो मूलं ज्ञापयन्पूजयाम्यहम्। नच लिङ्गार्चनात्पुण्यं लोकेऽस्मिन् भीतिनाशनम्। तथा लिङ्गे हितायैषां लोकानां पूजयेच्छिवम्"। इति। कूर्मपुराणे—"कृष्णोपि देवकीसूनुः परमात्मा सनातनः। कृतकृत्योपि योगात्मा मायावी विश्वभुक्स्वयम्॥ तथापि पूजयत्येव भगवन्तमुमापतिम्। लिङ्गे सर्वात्मकं मत्वा महादेवं पिनाकिनम्॥ हिमवत्पर्वतं गत्वा पूजयामास शङ्करम्। लिङ्गं तत्र प्रतिष्ठाप्य स्नाप्य गन्धोदकैश्शुभैः"॥ इति। आदित्यपुराणे। "देवीं स्कन्दं गणांश्चैव गोवृषं नन्दिकेश्वरम्। विनायकञ्च संपूज्य स्तुतिभिश्चस्तुव-

ह्वारिः ॥ उदकञ्चैव जग्राह बिल्वञ्च हरिरव्ययः। देवमावाहयामास रुद्रं सर्वेश्वरेश्वरम् ॥ ततः प्राप्तो महादेवस्सोमस्सप्रभो विभुः। तं पारिजातकुसुमैरर्चयामास केशवः ॥ नैवापश्यद्यदाबिल्वमुदकञ्च तदेश्वरम्। ददर्शौ देवं हृषीकेशः प्रमथानां गणेश्वरम्" ॥ इत्यादि हरिवंशेपि। एवं विधमैश्वर्यं यत् यस्मात्कारणात् ते तवास्तीतिशेषः। तस्मात्कारणात् नमसां नमस्काराणां त्वमेकं पात्रं विषयोसि भवत्प्रसङ्गं भवत्सम्बन्धमुक्त्वा यत्र वाक्ये नमो भवति तद्वाक्यं श्रुतिषु दुर्लभमेव प्राचुर्येण न भवति। नमो ब्रह्मणे इत्यादौ क्वचिदेव दृश्यत इत्यर्थः ॥ ९ ॥

प्रमाणोपन्यासपुरस्सरं नमश्शेषित्वं प्रतिजानीते।

**देव त्वदेकविषयाणि नमांसि पुंसां**
**यस्मै नमश्श्रुतिबलादवधारयामः।**
**देवान्तरेषु विहितान्यपि तान्यमूनि**
**स्रोतांसि सागर इव त्वयि संपतन्ति ॥ १० ॥**

हे देव दीव्यतेः क्रीडार्थत्वाद्देवशब्देन लोकभर्तुः लीलाकैवल्यमित्यर्थःन्यायविषयो लक्ष्यते। तेन नित्यतृप्तस्यापि देवस्य सर्वजगन्निर्मातृत्वनियन्तृत्वादिकान्निरभिसन्धिकमेव लीलारूपमुपवर्णितं भवति। तथाच श्रूयते। "कार्यं क्षित्यादि कर्तेश स्तत्कर्तुर्नोपयुज्यते। न स्वार्थमप्यचिद्भावात् नानर्थं कर्तृगौरवात्। पारिशेष्यात्परार्थन्तत् क्षेत्रज्ञास्सः परस्तयोः। ज्ञानमप्रतिभन्निश्चं

वपुरत्यन्तनिर्मलम्। ऐश्वर्यमप्रतिद्वन्द्वं सुखमात्यन्तिकं बलम्। परिपूर्णस्य सर्गाद्यैर्नात्मनोऽस्ति प्रयोजनम्। कृतकृत्यस्य तृप्तस्य किन्नाम क्रियते जनैः"। इति। वायवीयसंहितायां। "शिवस्य परिपूर्णस्य किन्नाम क्रियते जनैः" इति। शिवधर्मे। "ईश्वरस्तु स्वतन्त्रत्वात् प्रपञ्चस्यास्य सर्वदा। सृष्टिस्थितिविनाशांश्च कुर्वन्नाभूतसंप्लवात्। एता लीला महेशस्य सर्गरक्षालयाः प्रभोः"। इति। मार्कण्डेयपुराणे। "भोगार्त्थं सृष्टिरित्यन्ये क्रीडार्त्थमिति चापरे। देवस्यैषस्वभावोयमाप्तकामस्य का स्पृहा"। इति। माण्डूक्योपनिषदि। "यस्मै नयस्तस्मै त्वाजुष्टं नियुनज्मि यस्मै नम स्तच्छिरः"। इति च श्रुतिबलात् पुंसान्नमांसि। त्वदेकविषयाणि अनन्यविषयाण्यवधारयामः। निश्चिनुमः। ननु देवतान्तरविषयाण्यपि नमांसि क्रियन्त इति प्रतीयते। अत आह देवान्तरेष्विति। देवान्तरेषु ब्रह्मादिदेवान्तरेषु। विहितान्यप्यमूनि नमांसि स्रोतांसि जलप्रवाहा स्सागरइव त्वयि अवसानभूमौ संपपन्ति। अन्येषामनीश्वरत्वात्। तथा च द्रोणपर्वणि। "रुद्रस्य च भविष्यामः पशव स्सर्वकर्मसु। निपातयिष्यते चैतानसुरान्भुवनेश्वरः। फलंयेन्ये प्रयच्छन्ति भक्तानान्त्रिदशाः क्वचित्। तेप्याराद्ध्य महादेवं त्रिणबिन्दोऽन्यथा न हि"। इति। "ब्रह्मविष्ण्वादयो देवा ये केचित्स्थाणुजंगमाः। उमाधवस्य ते सर्वे बालक्रीडनका इमे"। काळिकाखण्डेप्युक्तं सर्वानुग्राहकपरमेश्वरप्रसादं विना स्वभक्तफलदातृत्वमपि ब्रह्मादीनां देवतानान्ना-

स्तीति लैङ्गचकाशिकाखण्डयोश्श्रूयते । विष्णुरपि स्वभक्त्या ध्रुवाय ध्रुवपदमीश्वरप्रसादलब्धं दत्तवानिति तस्मात्तत्र पर्यवसितानि नमांसि तदन्तर्यामिणन्त्वामेव प्राप्नुवन्तीत्यर्थः ॥ १० ॥

अनयोः श्रुत्योरर्थमाह ॥

**यस्मै नमश्श्रुतिरनूद्य नमस्त्विनन्त्वां**
**एका नियोजनमुवाच पशोः कपर्दिन् ।**
**अन्या चं दिव्यशिशुमारशिरो भवन्तं**
**शक्यन्तदित्थमुभयेन नमो विधातुम् ॥ ११ ॥**

हे कपर्दिन् एका यस्मै नमः श्रुतिः "यस्मै नम स्तस्मै त्वा जुष्टन्नियुनज्मि"। इति श्रुतिः। नमस्विनन्त्वामनूद्य उद्दिश्य पशोर्नियोजनमुवाच। अन्या। "यस्मै नमस्तच्छिरः"। इति-श्रुतिः भवन्तं दिव्यशिशुमारशिरः दिव्यशिशुमारशिरोरूपत्वेन निरूपितमाह उभयेन श्रुतिद्वयेन इत्थमुपपादितप्रकारेण नमो नमस्कारः विधातुं त्वच्छेषत्वेन तात्पर्यतः प्रतिपादयितुं शक्यम् ॥ ११ ॥

श्रुतिद्वयेऽपि सर्वत्र नमोलक्षणः कश्चिदेव प्रतीयते नतु तल्लक्ष्यईश्वर इत्याशंक्य पौर्वापर्यपर्यालोचनया प्रतीयत इत्याह श्रुत्योरिति ।

**श्रुत्यो र्द्वयो रपि नमस्विनमुच्यमानं**
**त्वामेव तन्तमनुसन्दधतः प्रदेशम् ।**

**शंसन्ति मन्दमतयोऽपि किमापतन्तं**
**मध्यन्दिने हि सवितारमपन्हवीरन् ॥ १२ ॥**

तं तं प्रदेशं श्रुत्योः पूर्वापरभागं अनुसन्दधतः पर्यालोचयन्तो विद्वांसः श्रुत्योर्द्वयोरपि त्वामेव नमस्विनमुच्यमानं शंसन्ति कथयन्ति श्रुतिद्वयपूर्वापरपर्यालोचनया नमोलक्षणमीश्वरं देवं निश्चिन्वन्तीत्यर्थः तथाहि मन्दमतयः जडधियोपि आपतन्तमागच्छन्तं मध्यन्दिने सवितारं किपन्हुवीरन् किमपलपेयुः अतिस्फुटतया प्रतीयमानन्नकोप्यपलपतीत्यर्थः ॥ १२ ॥

ईश्वरदेवताके शूलगवाख्ये कर्मणि पशुनियोजनमन्त्रस्य विनियोगात् शूलगवाख्यकर्मपौर्वापर्यपर्यालोचनयापि तन्मन्त्रस्येश्वरप्रतिपादकत्वं स्फुटमवगम्यत इत्याह।

**कर्मैव शूलधर शूलगवन्त्वदीयं**
**मन्त्रा भवन्तमखिलाः प्रतिपादयन्ति।**
**त्वामन्तरेण नमसा कृतलक्षणाय**
**कस्मै पशुं नियुनजानि नियोजय त्वम्॥ १३ ॥**

हे शूलधर "अत शूलगवस्संवत्सरेसंवत्सरे मार्गशीर्ष्यां पौर्णमास्या"मिति "अथ शूलगवस्संवत्सरे संवत्सरे शरदि वसन्ते वे" त्यादितश्च साकल्येन पशुपतिदैवत्यं बोधायनेनाश्वलायनेनोक्तं शूलगवनामकं कर्मत्वदीयमेव शूलोस्यास्तीति शूलः अर्शादिभ्योऽच् शूलीत्यर्थः तद्वते रुद्राय यो गवा पशुना याग स्सशूलगव इति

व्युत्पत्तिपर्यालोचनया त्वदीयं प्रतीयत इत्यर्थः मन्त्रलिङ्गादपि त्वदीयमित्याह मन्त्राइति "बहिरादाय गामुपाकरोति ईशानाय त्वा जुष्ट मुपाकरोमि ईशानाय त्वा जुष्टं प्रोक्षामि ईशानस्थाली-पाकं श्रपयन्ति अथ यदि गान्नलभते मेषमजं वा लभते ईशान-स्थालीपाकं वा श्रपयन्ति तस्मादेतत्सर्वं करोति यद्गवा कार्य" मिति यथाह चाश्वलायनः "पशूनामुपताप एतमेव देवं मध्ये गोष्ठस्य यजे"तेति देवशब्दश्च रुद्रपर्यायः। "देवः पूज्यः पिना-की"। इति निघण्टुः। "अष्टमीप्रदोषस्य कर्मणि देवस्यायतने प्रतिदिशं प्रद्योतय" तीति बोधायनवचनाच्च "देवमेवानुप्रविशति"। इत्यथर्वशिरसि श्रवणाच्च "एतं सर्वं रुद्रं यज्ञेष्वीशानमुपस्थानादिति चन्द्रमा" इति बोधायनीये "तावत् ईशानाय त्वा जुष्टं प्रोक्षा" मीति "सहस्राणि सहस्रश" इति "ईशानन्त्वा भुवनानामभिश्रिय" मिति "भवाय देवाय स्वा" हेत्यादयो "भवस्य देवस्य पत्न्यै स्वाहे" त्यादयो"भवस्य देवस्य सुताय स्वाहे" त्यादयो "नमस्ते रुद्र मन्यव" इत्यनुवाकयोरग्नाविचीयते स्थिताः आश्वलायनके च "रुद्राय महादेवाय युष्टो वर्द्ध" स्वेति "यस्मै नम स्तस्मै त्वा जुष्टं नियुन" ज्मीति "हराय कृशाय शर्वाय शिवाय भवाय महादेवाय उग्राय पशुपतये रुद्राय शङ्करायेशानाय स्वा" हेति "यास्ते रुद्रपूर्वस्या न्दिशि स्रोताभ्य एव नमः नमस्ते अस्तु मामाहिंसी" रिति "कद्रुद्राय" "इमारुद्राय" "आतेपितरि" इत्यादयश्चाखिला-मन्त्रा भवन्तं प्रतिपादयन्ति तद्धि तेन चतुर्थ्या वा मन्त्रवर्णेन

भाष्यते देवतासंगतिरिति मन्त्रलक्षणप्रमाणेन शूलगवस्येश्वरदेवता-कत्वनिश्चयात् अतस्तन्मध्यपातीपशुनियोजनमन्त्रोपि पशुपति-मेवलक्षयतीति युक्तं अतस्त्वामन्तरेण नमसा कृतलक्षणाय कस्मै देवाय पशुन्नियुनजानि नियोजयितुमवकाशं लभेमहि "स्वराद्यन्तोपसर्गादितिवक्तव्यं" इति निपूर्वाद्युजेरात्मनेपदेन भाव्यं नियुनजानीतिपरस्मैपदंमृग्यं त्वं वा नियोजय त्वयेश्वरेणापि अन्यथा नियोजयितुमशक्यमिति भावः ॥ १३ ॥

यस्मै नम स्तच्छिर इति श्रुतिरपि पौर्वापर्यपर्यालोचनया परिशेषप्रमाणेन त्वामेवावगमयतीत्याह॥ अङ्गान्तरेष्विति।

अङ्गान्तरेषु विबुधान्तरसंस्तुतेषु
यश्शिशुमारशिरसः परिशिष्यसे त्वम्।
तस्मै नमो भवितुमीश्वर सांप्रतन्ते
देवान्तराय न कथञ्चिदनीश्वराय ॥ १४ ॥

तैत्तरीयकाः समामनन्ति भूःप्रपद्यइत्यादि तत्र कश्यप-शिशुमारतया निरूप्यते। "यस्मै नमस्तच्छिरो धर्मो मूर्द्धानं ब्रह्मोत्तराहनुर्यज्ञोधरा विष्णु र्हृदयं संवत्सरः प्रजाननमश्विनौ पूर्वपा-दावत्रि र्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्र स्ततः प्रजापति रभयञ्चतुर्थं सवा एष दिव्यश्शाक्वर शिशुमार स्तं हय एवं वेदापपुनर्मृत्युञ्जयतिः जयति स्वर्गं लोकं नाध्वनि प्रमीयते नाप्सु प्रमीयते नाग्नौ प्रमीयते नानपत्यः प्रमी-

यते लब्ध्वान्नोभवति ध्रुवस्त्वमसि ध्रुवस्य क्षितिरसि त्वं भूतानामधिपतिरसि त्वं भूतानां श्रेष्ठासि त्वां भूतान्युपपर्यावर्तन्ते नमस्ते नम स्सर्वन्ते नमः"। इति तत्र शिशुमारात्मतया निरूपितकश्यपस्याङ्गान्तरेषु शिरोव्यतिरिक्तावयवान्तरेषु मूर्द्धोत्तराहनुरधराहनुहृदयं प्रजोत्पादकेन्द्रियपूर्वापरपादपुच्छमध्यापरपादप्रथमकाण्डद्वितीयकाण्डतृतीयकाण्डचतुर्थकाण्डाख्येषु विबुधान्तरेषु संस्तुतेषु धर्मब्रह्मयज्ञविष्णुसंवत्सराश्विन्यत्रिमित्रावरुणाग्नीन्द्रप्रजापतिसंसारभयनिवर्तकब्रह्माख्यदेवतान्तरत्वेन संस्तुतेषु देवतात्मकतयाऽभिहितेषु शिशुमारशिरसस्संस्तवाय यस्त्वं परिशिष्यसे परिशिष्टो भवति यद्यपि सूर्यादयोपि बहवः परिशिष्टास्सन्ति तथापि "स्तोमं वो अद्ये" ति मन्त्रेण रुद्रस्यैव नमस्वामित्वस्य स्फुटावगमात् तस्यैवात्रापि परिशिष्टता न्याय्येति परिशिष्यस इत्युक्तं हे ईश्वर तस्मै ते नमो भवितुं सांप्रतं युक्तं अनीश्वराय देवान्तराय कथञ्चिद्भवितुन्नसांप्रतं अनीश्वर स्स्वत एव नमस्कारानर्हः किंपुनरीश्वरे तिष्ठतीत्यर्थः ईश्वर इत्यनेन ईश्वरत्वमेव नमस्संबन्धिकारणमित्युक्तं भवति तथाचेश्वरस्यैवेश्वरत्वं श्रूयते। "सोऽयमात्मत्रयस्यात्र प्रकृतेः पुरुषस्य च । लीलाकृतजगत्सृष्टुरीश्वरत्वे व्यवस्थिता । यस्सर्वस्मात्परो नित्यो निर्मलः परमेश्वरः" । इत्यादि पौनः पुन्यप्रतिपादकेश्वरत्वानीश्वरत्ववचनेन तावदलं तथाप्रतिपादनेऽपि दैवोपहतस्य पुरुषस्य नाश्वासो भवति । तथाचोक्तं । "समुज्वलन्याय

सहस्रसाधितोऽप्युपैति सिद्धिन्नविमूढचेतसाम्। महेश्वरः पाणितले स्थितोपि सन् पलायते दैवहतस्य सन्मणिः"। इति। तथाच पाद्मेपुराणे। ईश्वरं प्रति विष्णुनमस्कारश्श्रूयते। "नमस्ते देवदेवेश नमस्ते शाश्वताऽव्यय। न जानेऽहं भवन्तञ्च त्वं त्वां वेत्थनमोनमः। शरणन्त्वां प्रपन्नोऽस्मि चक्षुर्मे दीयतां प्रभो। प्रणामं केवलं कर्तुं शक्तोस्मि नहि वेदितुम्"। इति अन्येषामनीश्वरत्वात्। तवैवेश्वरत्वात् नमस्कारार्हता प्रतीयते ॥ १४ ॥

रङ्गोपजीविनोपि यतो नमस्कारमुद्रया भवन्तमभिनयन्ति अतो नमश्शेषित्वं तवैव युक्तमित्याह—

**या वज्रिणी भवति शङ्कर शङ्खिनी या**
**मुद्रा च या कमलिनी भरतोपदिष्टा।**
**ताभिर्भवन्त्यभिनया विबुधान्तराणां**
**मौळिस्पृशा करपुटाञ्जलिमुद्रया ते ॥ १५ ॥**

हे शङ्कर भरतोपदिष्टा वज्रिणीति या मुद्रा भवति विद्यते शङ्खिनीति कमलिनीति च ताभि र्विबुधान्नराणां शक्रविष्णुब्रह्मणां क्रमेणाभिनया भवन्ति ते मौळिस्पृशा शिरस्यासीनया करपुटाञ्जलिमुद्रया नमस्कारमुद्रया अभिनयो भवति तथाचोक्तं भरतशास्त्रे। "वज्रिण्या मुद्रयाशक्रं पद्मिन्या दर्शयेद्विधिम्। शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रया"। इति इन्द्रादीनामायुधमुद्रया अभिनयेऽप्यस्यापि त्रिशूलाद्यायुधविशेषेणाभिनयितव्ये सति

तद्विहाय नमस्कारमुद्रया अभिनयः कृतः इति यत् अतोपि तस्यै-
वनमस्कार इत्यतितरां स्फुटं भवति ॥ १९ ॥

एवमीश्वरैकलक्षणतया नमसां प्रमाणसिद्धे ऽन्ये देवा जनै
र्दत्तान्यपि नमांसि स्वीयतया गृहीतुन्नशक्नुवन्तीत्याह ।

**दत्तन्नमः किमुपशुश्रुम देवताभ्यः**
**त्वामन्तरेण नमसामवसानभूमिम् ।**
**ता स्तद्गृहीतुमनलन्न हि कश्चिदीष्टे**
**चोरोपनीतमिव धारयितुं किरीटम् ॥ १६ ॥**

देवताभ्यः ब्रह्मादिभ्यः दत्तमपि नमः शुश्रुम "नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि"। इत्यादि श्रुतिभ्यो वयं श्रुतवन्तः नमसामवसानभूमिं त्वामन्तरेण त्वां विना देवता स्तन्नमो गृहीतुं स्वीकर्तुमनलमसमर्थाः हि यस्मात्कारणात्कश्चि-दपि नमस्कारश्चोरोपनीतक्किरीटमिव सार्वभौमेन धार्यङ्किरीटन्धार-यितुं स्वीकर्तुं क्षुद्रो यथा नेष्टे न प्रभवति अन्यमन्यमुपतिष्ठमा-नान्यपि नमांसि महेश्वर एव विश्राम्यन्ति न मध्ये फलं प्रयच्छ-न्ति तथा च मरुतः प्रस्तुत्य बह्वृचाः समामनन्ति । "स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसादिदिष्टन । एभि श्शि-वस्ववां एव यावभि र्दिवस्सिषक्ति स्वयशाः निकामभि" रिति । हे मरुतः स्तोमं स्तोत्रं वः युष्माकं शिक्वसे शक्ताय निग्रहानु-

ग्रहक्षमाय क्षयद्वीराय क्षयन्ति निवसन्ति वीरा वीरभद्रादयो गणा यमाश्रित्य क्षयनिवासगत्योरिति धातुः तस्मै रुद्राय नमसा नमस्कारेण सहार्थे तृतीया दिदिष्टन दिशत एभि स्तुतिनमस्कारैः एकवचनोपात्तयोरपि स्तुतिनमस्कारयो र्नानारूपत्वादेभिरिति बहुवचनं तैरसाधारणभूतैः स्ववान् स्वामी स्वयशाः अनन्यसाधारणयशाः एव यावभिः एतव्याः कामाः तेषु यावभिः आपतद्भिः कामेकामे समापतद्भिरित्यर्थः निकामभिः नितरां कामैः दीव्यन्तीति दिवः देवाःतान् युष्मान् सिषक्ति संयोजयति अयं भावः हे मरुतः युष्मदुद्देशेनास्माभिः क्रियमाणानि स्तोत्राणि नमांसि च रुद्राय प्रयच्छत यैः स्तुतिनमस्कारै स्स्ववानीश्वर स्तत्तदपेक्षितैः फलै र्देवान् भवादृशान् संयोजयति तस्मादन्यविषयाणामपि नमसामीश्वर एव पर्यवसानं एवमन्यविषयाणामपि स्तुतिजातानामीश्वरैकपर्यवसानता द्रष्टव्या स्तुतिनमस्कारयोरेकविषयत्वनियमात्। तथा चोक्तं सर्वज्ञकाळिदासेन। "अस्तोतु स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः"। इत्यादि। स्वयमन्यस्य स्तोता न भवतीति अस्तोता तस्य किन्तु स्तूयमानस्य सर्वस्तुत्यस्य वन्द्यस्य अनन्यवन्दिनः स्वयमन्यं न वन्दत इति अनन्यवन्दिनः इत्यादि। एतदभिप्रायेण कश्यपे भूताधिपतित्वेन संस्तुते। "सर्वन्तेनमः। इति श्रुतिः तदिदमुक्तं नमसामवसानभूमिमिति। ननु "आकाशात्पतितं तोयं यथा गच्छति सागरम्। सर्वदेवनमस्कारः केशवं प्रति गच्छति"। इति केशवस्य नम-

स्कारपर्यवसानभूमितोक्ता सत्यं तथापि अस्य वचनस्य स्मृतित्वेन "स्तोमं वः" इत्याति श्रुतिविरोधात् विरोधाधिकरणन्यायेन सर्वावेष्टनस्मृतिवदप्रामाण्यं वक्तव्यं तथा हि। "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्"। इति "ज्योतिष्टोमे महावेद्यां सदो नामकस्य कस्यचिन्मण्डपस्य मध्ये काचिदौदुंबरी शाखा निखन्यते तस्याश्च वाससा वेष्टनं स्मर्यते। औदुंबरी सर्वा वेष्टयितव्या" इति स्मृतिः। "औदुंबरीं स्पृष्ट्वोद्गायेत्"। इति श्रुतिः। तत्र संशयः। एषा स्मृतिः प्रामाणं न वेति। तत्र पूर्वाधिकरणे अष्टकाः कर्तव्या इत्यस्या स्मृतेर्मूलवेदानुमापकत्वेन प्रमाण्यमुक्तं तेनैव न्यायेन सर्वावेष्टनस्मृतेः प्रामाण्यमिति पूर्वः पक्षः औदुंबरीं स्पृष्ट्वोद्गायेदित्यनेन प्रत्यक्षवेदवचनेन स्पर्शो विधीयते न च सर्वावेष्टने स्पर्शस्संभवति अतो मूलवेदानुमापकस्याप्रामाण्यमुक्तं तेनैव न्यायेन कालात्ययापदिष्टं तस्माद्विप्रलम्भकवाक्यवन्निर्मूला सर्वावेष्टनस्मृतिरप्रमाणं तद्वत्केशवनमस्कारपर्यवसानस्मृतिरप्यप्रमाणमितीश्वरस्यैव स्तुतिनमस्कारपर्यवसानभूमिताऽङ्गीकार्येति सिद्धम्॥१६॥

ननु ईश्वरादन्येषां नमस्कारानर्हत्वात्तद्विषयो नमस्कारो व्यर्थ इत्यत आह॥

तस्मै नमो भवतु यत्र निषीदसीति
सर्वं नमस्यमनया तु दिशा महेश।
अप्योषधीः प्रति नमो वयमामनामो
देहीव देहमधितिष्ठसि येन सर्वम्॥१७॥

यत्राधिष्ठाने त्वं निषीदसि तस्मै अधिष्ठानाय नमो भवतु अत्रश्रुतिः। "नमस्ते अस्त्वायते नमो रुद्रपराय ते नमो यत्र निषीदसि"। इति। यत्र निषीदसीत्येतत्तन्त्रोपात्तं द्रष्टव्यम्। अनया दिशा अनेन न्यायेन तु सर्वं वस्तु नमस्यं नमस्कारार्हं तत्रोदाहरणमाह अपीति ओषधीरपि ओषधीः प्रति उद्दिश्य नमः नमस्कारं वयमामनामः ब्रूमः। "नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्य" इत्यादिश्रुतौ तत्तन्नमस्कारमधीमह इत्यर्थः। म्ना अभ्यास इत्यस्य पाघ्रादिसूत्रेण मनादेशः अत्र हेतुमाह देहीति देही देहमिव येन कारणेन विश्वमधितिष्ठसि अन्तर्यामितया विश्वस्मिन्वर्तसे तथा च बृहदारण्यके। "यः प्रथिव्यां तिष्ठन्प्रथिव्यामन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरोयमयति एषत आत्माऽन्तर्याम्यमृतः"। इति। "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः। यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान्विनियोजयेद्यः"। इत्यादि। श्वेताश्वतरोपनिषदि। "यो योनिं योनिमधितिष्ठत्येको येनेदं पूर्णं पञ्चविधञ्च सर्वम्"। अथर्वशिरस्यपि श्रूयते। "शिवेनाधिष्ठितं सर्वं जगदेतच्चराचरम्। सर्वरूपधरश्शर्वस्तथा ज्ञात्वा न मुह्यति। मूर्त्यात्मभिस्ततं विश्वं जगदेतच्चराचरम्। स शिवस्सर्वमेवेदं स्वकीयाभिश्च मूर्तिभिः। अधितिष्ठत्यमेयात्मा तस्मात्सर्वतनुस्मृतः। अष्टमूर्त्यात्मना विश्वमधिष्ठाय स्थितश्शिवः।

भजस्व सर्वभावेन रुद्रं परमकारणम् । शिवेनाधिष्ठितं तस्माज्जगत्स्थावरजंगमम् । एवं रूपस्मृतश्शंभुस्तथा ज्ञात्वा न मुह्यति । अधिष्ठाता ततो नित्यो विज्ञेयो जगतश्शिवः"। इत्यादि । वायवीयसंहितायां । तस्मात्सर्वजगदधिष्ठातृत्वात्तदधिष्ठानभूतं सर्वमपि नमस्यमिति सिद्धं भवति ॥

अनेनैव न्यायेनात्यन्तं निकृष्टा श्वादयोपि नमस्यतया श्रुता इत्याह ॥

सर्वं त्वया जगदधिष्ठितमेव मत्वा
श्वानश्श्रुतौ नमसिताः पतयश्च तेषाम् ।
लोके पुनस्तव महेश्वर भक्तियोगा-
दारोपिता अपि वयं बहुमानपात्रम् ॥ १८ ॥

सर्वं जगत् त्वयाऽधिष्ठितंमत्वा श्वानः तेषां पतयश्च श्रुतौ नमसिताः नमोविषयाश्श्रुता इति शेषः । नवश्शब्दान्नमोवरिवश्चित्रङः क्यच् निष्ठायां इटि कृते अतो लोपे । यस्य हलः । इति यलोपे रूपम् । "श्वभ्यश्श्वपतिभ्यश्च वो नमः" । इति श्रुतिः । तथाचोक्तं । "मूर्त्यष्टकमधिष्ठाय विभर्तीदञ्चराचरम् । आत्मत्रयमधिष्ठाय सृष्ट्यादि च करोति सः" । अतोवै श्वरूपेण स्तुत्वा तमेव नमस्यं दर्शयति । इति श्रीरुद्रभाष्येप्युक्तं । "एकद्वित्रिमलान्सर्लान् शिव एकोऽधितिष्ठति । अशिवात्मकमप्येतत् शिवेनाधिष्ठितं यथा । अरु-

द्रात्मकमप्येतद्रुद्रैर्जगदधिष्ठितम्। अण्वान्ता हि महाभूमिश्शतरुद्राद्यधिष्ठिता"। इति। वायवीयसंहितायां। तस्मात्सर्वजगदधिष्ठातृत्वमेवेश्वरस्य सर्वश्रुतिपुराणेषु प्रसिद्धम्। ननु ईश्वरस्य सर्वजगदधिष्ठातृत्वं साक्षाद्वा परंपरया वा। नाद्यः। सर्वजगतां शरीरत्वप्रसङ्गात् यत्साक्षात् प्रयत्नवधिष्ठेयं तदेव हि शरीरम्। नापि द्वितीयः। साक्षादधिष्ठानद्वारा खलु परंपरयाधिष्ठानं तस्यैवाभावात् तदभावात् तदभाव इति चेन्न साक्षादधिष्ठेयत्वे यतिदं शरीरत्वमापद्यते तत्किन्नाम साक्षात्प्रयत्नवदधिष्ठेयत्वञ्चेत्तदिष्यत एव। अतोऽन्त्यं न प्रसञ्जकम्। इन्द्रियार्थत्वञ्चेत्तदप्यसारं। तदवच्छिन्नप्रयत्नोत्पत्तौ तदवच्छिन्नप्रतिहेतुद्वाराहीन्द्रियाणामुपयोगः नह्यनवच्छिन्नप्रयत्ने इयं नियमविशेषकलनेति सर्वमतिसुन्दरम्। ननु यत्र नमस्संबन्धे श्रुतिरस्ति तत्र तथाऽस्तु यत्र न सा तत्र कथं नमस्यत्वमिति अत आह। लोकइति हे महेश्वर वयमपि तव भक्तियोगात् भजनसंबधात् लोके बहुमानपात्रं नमस्कारपूजापात्रं आरोपिताः प्रापिताः अस्माद्दशानान्तु नमस्यत्वे भक्तिरेव कारणमित्यर्थः। तथा च शिवतत्वनिरूपणे। "भक्तः प्रियो मे सततं यथार्थं क्रौञ्चमूदन। तस्य संपूजनाद्वत्स पूजितोऽहं न संशयः। भक्तिरष्टविधा स्कन्द यस्मिन्म्लेच्छेऽपि वर्तते। तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहं"। इति। आदित्यपुराणे। "शृणु ब्रह्मन् महाविष्णो कुलिशिन् सुरसत्तम। तथ्यं हितं वचः पथ्यं मत्प्रीतिजनकं शुभम्। प्रजापते त्वं विष्णु-

र्वा शक्रो वाऽन्ये सुरादयः। अज्ञानादथवा ज्ञानान्मद्भक्तेषु महात्मसु। कुर्युश्चेदपराधं ते दण्ड्या वध्याश्च नित्यशः। मद्भक्तं द्वेष्टि यो मोहादपराध्यति वाऽधमः। न सहे ऽहन्दुरात्मानं सहे मय्यपराधिनम्। मद्भक्तरक्षणायैव मम सर्वं हि चेष्टितम्। इति जानीत मद्भक्तान्प्राणेभ्यो ऽपि गरीयसः। इति श्रुत्वा वचश्शंभोः ब्रह्माद्याः प्रणतिं गताः"। इति। वायवीयसंहितायामपि। "अन्त्यजो ऽवाधमो वा ऽपि मूर्खो वा पण्डितो ऽपि वा शिवं प्रपन्नश्चेत्कृष्ण पूज्यस्सर्वसुरासुरैः"। इति ॥ १८ ॥

सर्वेषामपि नमसां प्रयोजकद्वैविध्याद्द्वैविध्यमेवेत्याह—

द्वेधा नमो विमृशतः प्रतिभाति लोके
वेदेषु वा विषमलोचन नान्यरूपम्।
यत्तन्नमस्त्वयि तदीश्वरताप्रयुक्तं
त्वत्सन्निकर्षविहितं यदनीश्वरेषु ॥ १९ ॥

हे विषमलोचन विमृशतः पर्यालोचयतः पुरुषस्य लोके पुराणे वेदेषु वा नमो द्वेधा प्रतिभाति। अन्यरूपं अन्यत् रूपं प्रकारो यस्य तत् प्रकारान्तरं युक्तं न भवति। द्वैविध्यमेवाह—यदिति त्वयि विषये यन्नमः तत् ईश्वरताप्रयुक्तं नमस्स्वामितया प्रवर्तितं अनीश्वरेषु ईश्वरादन्येषु यन्नमस्तत् त्वत्सन्निकर्षविहितं त्वत्सम्बन्धप्रवर्तितमिति ॥ १९ ॥

ननु नमस्कृत्य हि वसीयांसमुपचरन्तीति श्रुत्या वसीयस्त्वमपि नमोविषये प्रयोजकं प्रति यत इत्याह—

त्वत्सन्निकर्षकृत एव नमःप्रयोगः
प्रायो वसीयसि यवीयसि दृश्यमानः।
श्रैष्ठ्यप्रयुक्त इति कल्पयितुन्नशक्य-
मश्रेयसामपि नमांसि निदर्शितानि ॥ २० ॥

त्वत्सन्निकर्षकृत एव नमःप्रयोगः प्रायः वसीयसि श्रेष्ठ ब्राह्मणादिषु यवीयसि अश्रेष्ठे श्वादौ च दृश्यमानस्सन् श्रैष्ठ्यप्रयुक्त इति कल्पयितुन्नशक्यं यतोऽश्रेयसामपकृष्टानां श्वादीनामपि नमांसि निदर्शितानि उदाहृतानि तस्मात्त्वत्सन्निकर्ष एव नमस्यत्वेऽप्रयोजकश्श्रैष्ठ्यभाव इति भावः। नमस्कृत्येति श्रुतिस्तु सन्निकर्षप्राप्तानुवादः ॥ २० ॥

तुष्यतु दुर्जन इति न्यायेनास्तु श्रैष्ठ्यं नमस्यत्वे प्रयोजकं तथापि भवतो नमोलक्षणत्वे का हानिरित्याह—

श्रैष्ठ्यप्रयुक्तमपि नाम नमस्त्वदीयं
श्रेष्ठोऽसि यः क्रतुभुजां पतिरग्रियानाम्।
श्रेष्ठश्श्रुतोसि भगवन्नविशेषतस्त्वं
मन्त्रेषु कृच्छ्रपठितेषु च सामगानाम् ॥ २१ ॥

श्रेष्ठ्यप्रयुक्तमपि नमः त्वदीयं नाम त्वत्सम्बन्धि खलु अघ्नियानां पशूनां पतिर्यस्त्वं क्रतुभुजान्देवानांमध्ये श्रेष्ठोऽसि तथाच नक्षत्रे अष्टौ मन्त्राः "आर्द्रया रुद्रः प्रथमान एति श्रेष्ठो देवानां पतिरघ्नियानाम्"। इति अघ्नियानां पशूनां पतिः। "अर्जुन्यघ्ना रोहिणी"। इति। पशुपर्यायेष्वमरः। अघ्नियानाम्। इति पदस्य श्रुत्यनुकरणात्साधुत्वं किञ्च हे भगवन् सामगानां कृच्छ्रग्रन्थपठितेषु मन्त्रेषु अविशेषतः सामान्येन श्रेष्ठश्रुतोसि। "नमो ज्येष्ठाय श्रेष्ठाय"। इति कृच्छ्राधिकरणे सामगाः पठन्ति ॥ २१ ॥

एवन्त्रयोदशश्लोकैरुपपत्तिपुरस्सरं नमोलक्षणमीशस्य सप्रपञ्चन्निरूपितम्। देवान्तरैः सह नमस्तुत्याह्वानान्यपि श्रुतिः सहतेनेश्वरस्येति तत्प्रसङ्गादथोच्यते ॥

अथ नमोलक्षणत्वप्रतिपादनान्तरं देवान्तरैस्सह नमस्तुत्यसहं मन्त्रार्थं श्लोकरूपेणाह—

देवान्तरैस्सह नमस्स्तुतिहूतयस्ते
तोषाय नालमलमेव विपर्ययाय।
पुत्रार्थिनश्चरुविधौ सह चन्द्रमौळे
सोमेन हूतमनु शुश्रुम रुद्रमग्निम् ॥ २२ ॥

देवान्तरैरिति । देवान्तरैस्सह नमस्तोत्राह्वानानि ते तोषाय सन्तोषाय नालं न समर्थानि किन्तु विपर्ययाय क्रोधायैवालं तथाच वेदेषु श्रूयते । "मात्वा रुद्र चुक्रधामानमोभिर्मादुष्टुतीवृषभमासहूतीउन्नोवीरा अर्पय भेषजेभिर्भिषक्तमंत्वा भिषजां शृणोमीति"। अस्यार्थः । हेरुद्र नमोभिः देवान्तरैस्सह नमस्कारैः दुष्टुती दुष्टुत्या देवान्तरसदृशस्तुत्या सहूति सहूत्या सहह्वानेन मा चुक्रुधाम न कोपयाम । नैरुक्ताव्याचक्षते च । "किञ्च तुल्यनमस्कारैर्देवतान्तरगामिभिः दुष्टुत्या सदृशास्तुत्या समानाह्वानकर्मणा । न वयं चुक्रुधाम त्वां सर्वदेवनमस्कृतम्"। इति । शिवतत्वनिरूपणे च । "यो महादेवमन्येन हीनदेवेन दुर्मतिः । सकृत्साधारणं ब्रूयात्सोन्त्यजो नान्त्यजोऽन्त्यजः" इति । आदित्यपुराणेपि । "विश्वेश्वरमुमाकान्तं विश्वान्तर्यामिणं विभुम् । न ब्रह्माद्यैस्समं ब्रूयात् शक्तिभिर्नैव पार्वतीम् । ब्रूयाद्यदि समं शम्भुं ब्रह्मविष्ण्वादिभिस्सुरैः। यः कश्चित्तमसाविष्टः कदाचिन्नैव तं स्पृशेत्" । इति । तथा पराशरपुराणेपि । "महादेवसमं विष्णुं मनुते यस्तु मानवः । तस्य वंशस्य साङ्कर्यमनुमेयं विपश्चिता" । इति । तथाच स्कान्दे सूतसंहितायाम्। "खद्योतो यदिचण्डभानुसदृशस्तुल्यो हरिश्शम्भुना निंपाको यदि चन्दनेन सदृशः" । इत्यादि । तथा च भागवते तृतीयस्कन्धे । "यस्यानवद्यञ्चरितं मनीषिणो गृणन्त्यविद्यापटलं बिभित्सवः । निरस्तसाम्यातिशयोऽपि यस्स्वयं पिशाचचर्यामचरत्सतां गतिः"। इति । चतुर्थस्कन्धोऽपि । "ना हं न यज्ञो न च

यूयमन्ये ये देवभाजो मुनयश्च तत्वम् । विदुः प्रमाणं बलवीर्ययोर्वा तस्यात्मतन्त्रस्य क उद्विधित्सेत्"। इति । अष्टमस्कन्धेपि । "निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाख्यमग्रतः । तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति । भीताः प्रजावम् दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाश्शरणं सदाशिवम्"। इत्यादि । ननु । "सोमारौद्रश्चरुन्निर्वपेत्प्रजाकामस्सोम" इत्येतस्मिन् पुत्रकामचरुविधिवाक्ये सोमेन सह रुद्रस्य निर्देशात् तत्र विनियुक्तेषु याज्यापुरोनुवाक्यादिषु मन्त्रेषु सोमेन सहाह्वानं रुद्रस्याङ्गीकार्यमित्यत आह । पुत्राथिन इति पुत्रार्थिनः पुत्रकामस्य चरुविधौ । "सोमरौद्रश्चरुन्निर्वपेत्प्रजाकामः"। इति । चरुविधायकवाक्ये सोमेन सह हुतं निर्दिष्टं रुद्रं रुद्रशब्दवाच्यं दैवतं अग्निमनुशुश्रुम तदनन्तरादर्थवादवाक्यद्वयान्निश्चितवन्त इत्यर्थः ॥ २२ ॥

एतमेवार्थमुत्तरश्लोकेन दर्शयति ।

**अग्निं प्रकृत्य खलु रुद्रपदं प्रयुङ्क्ते**
**तद्ब्राह्मणं भवति यत्र तयोस्सहूतिः ।**
**आह्वानमत्र भवतः पृथगेव दृष्टं**
**यत्प्रातरग्निमिति सूक्तविदः पठन्ति ॥ २३ ॥**

अत्र ब्राह्मणशब्दः विधिपरः । "शेषेब्राह्मणशब्दः" इति जैमुनिसूत्रेण मन्त्रव्यतिरिक्तविध्यर्थवादेषु ब्राह्मणशब्दइत्युक्तत्वात् यत्र "सोमारौद्रश्चरु न्निर्वपेत्प्रजाकाम" इति सोमरुद्रदेवताकच-

रुविधानानन्तरं "सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतोदधात्यग्निः प्रजाः प्रजनयति"। इति। विधिविशेषतदर्थवादवाक्ये अग्नेः प्रशंसनादविहितस्य प्रशंसायोगात् विधिवाक्येऽपि रुद्रशब्देनाग्निर्विवक्षितइति संदिग्धे तु वाक्यशेषादिति न्यायेन निश्चीयते संदिग्धे तु वाक्यशेषात्। "शर्करा अक्ता उपदध्यात् तेजो घृत" मित्यत्र संशयः किं घृततैलपयसामन्यतमेन येन केनचिदञ्जनं कार्यं उत घृतेनैवेति तत्र प्रधानं विधिरर्थवादोऽङ्गं नचाङ्गेन प्रधानं बाधितुं शक्यं विधिश्चापूर्वविषयत्वाद्यथाश्रितएव नेतव्यः अर्थवादस्त्वनुवादवाक्यत्वाल्लक्षणया विनीयमानो नातीव दुष्यति। तस्माद्येनकेन चिदञ्जनमिति पूर्वः पक्षः निर्विशेषेण सामान्येन व्यवहाराभावाद्यःकश्चिद्विशेष उपादेयः असति विशेषप्रमाणे अक्ताइत्यत्र घृतग्रहणे प्रमाणमर्थवादः सहि घृतंस्तुवन्नविधेयस्य स्तुत्ययोगात् इति विधेयत्वं गमयति तस्मात् घृतेनाञ्जनमिति सिद्धान्तः एवमर्थवादवशाद्विधिवाक्येषु रुद्रशब्दोऽग्निवाचकइति। यत्रैश्वरस्याह्वानं तत्र पृथगेवेत्याह आह्वानमिति सूक्तविदः "प्रातरग्निं प्रातरिन्द्रं हवामह"इति यन्मन्त्रवाक्यं पठन्ति तत्र मन्त्रवाक्ये भवत आह्वानं पृथगेव द्रष्टव्यम्॥ २३॥

एतस्य मन्त्रस्य तात्पर्यमाह।

अग्न्यादिभिस्तव महेश्वर हूतिशङ्का
माभूदिति प्रकृतमप्यनुषङ्गयोग्यम्।

मन्त्रः क्रियापदमपास्य पदान्तरेण
त्वामाह्वयन्नुतपदेन भिनत्ति रीतिम् ॥ २४ ॥

"प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विनः प्रातर्भगपूषणं ब्रह्मणस्पतिं प्रातस्सोममुत रुद्रं हुवेम" इति मन्त्राः तव अग्न्यादिभिर्देवैस्सह हूतिशङ्का आह्वानशङ्का माभूदिति मत्वा प्रकृतं प्रस्तुतं अनुषङ्गयोग्यमनुवृत्तियोग्यमपि हवामहे इति क्रियापदमपास्य परित्यज्य पदान्तरेण क्रियापदान्तरेण त्वमाह्वयन् उतशब्देन अप्यर्थेन रीतिं त्वदाह्वानस्य देवतान्तराह्वानसादृश्यं भिनत्ति निराचष्टे रुद्रमुत रुद्रमप्याह्वातुं लभेमहीत्यर्थः ॥ २४ ॥

ननु, कथमग्नौ रुद्रशब्दप्रवृत्तिरित्याशंक्याग्नौ रुद्रशब्दप्रवृत्तिनिमित्तं वदन् तत्प्रसङ्गादन्यानपि रुद्रशब्दवाच्यार्थान् प्रवृत्तिनिमित्तैस्सह श्लोकत्रयेण प्रतिपादयति ॥

न्यासीकृतं वसु बलादमरैरवाप्त-
मन्वागतो रुदितवानिति रुद्रमग्निम्।
रुद्रांस्त्वदुद्भवतया मरुतो गणान्वा
रुद्रावणेन च भवन्तमवैमि रुद्रम् ॥ २५ ॥

अमरैर्न्यासीकृतं निक्षिप्तं वसु तैर्बलादवाप्तमन्वागतो रुदितवान् रुदिरत्रान्तर्भावितणिच्कः रोदितवानित्यर्थः इति हेतोरग्निं रुद्रशब्दवाच्यमवैमि तथाच श्रुतिः। "देवासुरास्संयत्ता आसन् ते

देवा विजयमुपयन्तोऽग्नौ वामं वसु सन्न्यदधते इदमुनो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत तेनापाक्रामत् तद्देवा विजित्यावरुरुत्समाना अन्वायन् तदस्य सहसा दित्सन्त सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" । इति। अस्यार्थः देवासुरा युद्धाय संयत्तास्सन्नद्धा आसन् ते देवा विजयमुपयन्तः विजेतुं गच्छन्तः अग्नौ वामं श्रेष्ठं वसु सन्न्यदधते सम्यङ्निहितवन्तः तत्र हेतुमाह इदमिति असुरा नोऽस्मान्यदि जेष्यन्ति तदा अन्यस्मिन्वसुनि निहिते सति सर्वमन्यद्वस्तु तैरपहृतमपि इदं नः अस्माकमापद्धनं भविष्यतीति मत्वा निहितवन्त तद्वसु अग्निर्न्यकामयत गृहीतुमैच्छत् तेन धनेन सहापाक्रामत् अन्यत्र गतवान् देवा असुरान्विजित्य अग्निं तद्धनमवरुरुत्समाना अवरोद्धुमिच्छन्तः तमग्निमन्वायन् अन्वगच्छन् अस्याग्रेर्हस्तस्थितं तद्वसु सहसा बलेनादित्सन्त आदातुमैच्छन् अग्निस्तु तद्वसु नाददत् अरोदीत रोदयति स्म तस्मादग्नेरुद्रत्वमिति । ण्यन्ताद्रुदि अश्रुविमोचने इति धातोः रण्प्रत्यये णिलोपे च कृते रुद्रशब्दो निष्पन्न इति। एतद्रुद्रशब्दं मन्दाः पिनाकिनि प्रयुञ्जते तदसङ्गतं राणकाचार्यैरप्युक्तं "एतद्रुद्रशब्दं पिनाकिनि प्रयुञ्जानानामभिप्रायन्न विद्म" इति मरुतः मरुन्नामकान्देवगणान् पारिषदांश्च त्वदुद्भवतया रुद्रानवैमि "आत्मा वै पुत्रनामासी"त्यादौ पितृपुत्रयोरभेदश्रवणात् त्वद्वाचको रुद्रशब्दः त्वत्पुत्रेषु त्वदभिन्नेषु मरुत्सु गणेषु च वर्तत इति भावः मरुतां पितृत्वे महेश्वरस्य बहवो मन्त्रास्सन्ति।"आते पितर्मरुतां सुम्न-

मेतुथयापितास्वपारुद्रएषाम्। मरुतां पितस्तदहं गृणा"मोत्यादयः। मरुतां रुद्रशब्दाभिधाने मन्त्राः। "आरुद्रास इन्द्रवन्तस्सजोषसो हिरण्यरथास्सुवितायागन्त"नेति। आरुद्रासः हेरुद्राः मरुतः इन्द्रवन्तः नोऽस्माकं सजोषसः प्रीतियुक्ताः हिरण्यरथाः सहिरण्मयरथाः सुविताय कल्याणाय आगन्तन आगच्छेत्यर्थः। इति। गणानामीश्वरादुत्पत्तिः आदित्यपुराणे श्रूयते। "प्रजास्सृजेति निर्दिष्टश्चन्द्रमौळिर्विरिञ्चिना। ससर्ज मनसा रुद्रानात्मतुल्यान्महेश्वरः। नीलकण्ठांस्त्रिणेत्रांश्च जटामकुटमण्डितान्"। इति। पारिषदानां रुद्रशब्दाभिधाने श्रुतिः। "सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्। इति। रुद्द्रावणेन भक्तनां रुदः दुःखस्य दुःखहेतोर्वा द्रावणेन अपसारणेन प्रवृत्तिनिमित्तेन भवन्तं रुद्रमवैमि। तथाच पुराणवचनम्। "रुद्दुःखं दुःखहेतुर्वा तद्रावयति यः प्रभुः। रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्"। इति। अथवा रुतानादेन सकलं जगदिदं द्रावयति रञ्जयतीति नादात्मकत्वादिति रुद्रः। अथवा रुता शब्देन प्रणवरूपेण वेदरूपेण वा द्रावयतीष्टमर्थं गमयतीति रुद्रः। अथवा संसारचक्रपरिवर्तिनः तत्क्लेशपरम्परामनुभवतः प्राणिनः दृष्ट्वा कृपयाविष्टो रोदितीति रुद्रः। अथवा सर्वाणि भूतान्यन्तकाले रोदयतीति रुद्रः। अथवा रोरूयमाणो द्रावयति प्रविरमति मर्त्यानिति वा रुद्रः। "त्रिधा बद्धो वृषभो रोरवीति। महोदेवो मर्त्यां आविवेश"। इति। यद्वारोधिका मोहिकावर्द्धिका या शक्तिः रुत् तद्वान् तस्य द्रावयिता वा। भक्तेभ्यो रुदं संसारदुःखं द्राव-

यतीति वा रुद्रः। "अशुभद्रावको रुद्रः जहार च पुनर्भवम्"। इति। रुतिं शब्दं वेदात्मानं ब्रह्मणे ददाति कल्पादाविति वा रुद्रः। "यथा यो वै वेदांश्च प्रहिणोति तस्मै"। इति। च शब्दस्यानुक्तसमुच्चयार्थत्वादेतान्यपि प्रवृत्तिनिमित्तान्याचार्येण विवक्षितानि ॥ २५ ॥

(क्रमशः)

**यज्ञेऽपि रुद्रपदमारुणकेतुकोक्तं**
**तच्छब्दमीश्वर तदीयमपि स्मरन्ति।**
**यत्तत्प्रदेशगतयज्ञपदावकाशे**
**यज्ञस्य शब्दमनुशुश्रुम सामगेभ्यः ॥ २६ ॥**

रुद्रपदं यज्ञे ऽपि यागे ऽपि आरुणकेतुकोक्तं आरुणकेतुकाख्ययजुर्वेदारण्यभाग उक्तं। "एतद्रुद्रस्य धनुः रुद्रस्यत्वेव धनुरार्त्तिः शिर उत्पिपेष सप्रवर्ग्योऽभवत् तस्माद्यस्सप्रवर्ग्येण यज्ञेन यजते। रुद्रस्य स शिरः प्रतिदधाति"। इति। तस्माद्यज्ञे कथं रुद्रशब्दप्रवृत्तिरित्याशङ्क्य रुद्रसम्बन्धित्वादित्याह तच्छब्दमिति तदीयमपि तत्सम्बन्ध्यपि वस्तुतस्तच्छब्दं स्वस्वामिवाचको यस्य तच्छब्दं स्मरन्तीति यथा राजकीयो राजशब्दवान् तथा रुद्रशब्दो यज्ञे वर्तते तद्राजकत्वात्। "आवोराजानमध्वरस्य रुद्र" मिति मन्त्रः। अत एव रुद्रसम्बन्धी यज्ञोऽपि रुद्रशब्दवानिति भावः अनेन तदीयत्वमपि तच्छब्दप्रवृत्तिनिमित्तमित्युक्तम्। आरुणकेतुके

प्रवर्ग्यासाधारणे ब्राह्मणे। "देवा वै सत्रमासत"। इत्यादौ यज्ञात्मा पुरुषः स देवस्साधारणं वैष्णवं यशस्स्वयं तदात्मतया स्वकीयमिति मत्वा समादायापक्रामत् तदा दशभिर्देवैरनुगतस्सेषुधन्वा तैरभिभवितुमशक्तस्सन् एकोहमेभिरनेकैरनभिभवनीयोऽस्मीति स्मयमानस्स्वत एवापक्रान्ततेजा धनुरवष्टभ्यातिष्ठत ततो दशभिर्देवैर्दत्तस्वाभिमतवरलाभतोषितवम्रिकामुखविलूनमौर्वीकं तदेवधनुरुत्प्लवमानं स्वयमध्वरात्मनश्शिरस्सरभसमपजहार तत्प्रवर्ग्यत्वमभजत् ते देवा अश्विनावब्रुवन् भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्तमिति तावब्रूतां वरं वृणावहै ग्रह एवनावत्राति गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन् तावेतद्यज्ञस्य शिरः प्रत्यधत्तां यत्प्रवर्ग्यं प्रवृणक्ति यज्ञस्यैव तच्छिरः प्रतिदधातीति। प्रदेशान्तरे च। "यज्ञो वै मखः तस्यैतच्छिरः यत्प्रवर्ग्य" इति। वाजसनेयिनश्च। "विष्णोश्शिरः प्रचिच्छिदतु यत्प्राङिति पपात तत् घर्मस्य घर्मत्व"मिति। तत्र विष्णुशब्दो यज्ञवचनः तदात्मकत्वात्। "यज्ञो वै विष्णुः"। इति श्रुतिः एवं सर्वत्र यज्ञशिरस एव प्रवर्ग्यत्वमिति तदुक्तं यज्ञेऽपीति आरुणकेतुकोक्तस्य रुद्रशब्दस्य यज्ञवाचित्वं तत्समानार्थश्रुत्यन्तरोदाहरणेन स्पष्टयति। यत्तदिति यद्यस्मात्कारणात् तत्प्रदेशगतरुद्रपदावकाशे तदारुणकेतुकाख्ययजुर्वेदारण्यभागगतरुद्रपदस्थाने सामगेभ्यः यज्ञस्यैव तच्छिरः प्रतिदधातीति श्रुतेः यज्ञस्येति शब्दमनुशुश्रुम आरुणकेतुकश्रुतिसमानार्थायां यज्ञस्यैव तच्छिरः प्रतिदधाति इत्यस्यां श्रुतौ रुद्रशब्दस्य स्थाने

यज्ञशब्दश्रवणात् गतिसामान्यादितिन्यायेनारुणकेतुकेऽपि रुद्रशब्दो यज्ञशब्दवाचीत्यवगन्तव्य इति भावः ॥ २६ ॥

सन्ताप्य रोदयितरि प्रसभं जनाना-
माहुर्ज्वरेऽपि विषमेक्षण रुद्रशब्दम् ।
रौद्रञ्च तत्प्रकृतिकं प्रतिरूपकं वा
शब्दान्तरं भवति वायसशब्दकल्पम् ॥ २७ ॥

सन्ताप्य सन्तापमुत्पाद्य प्रसभं बलात्कारेण जनानां रोदयितरि ज्वरेऽपि रुद्रशब्दमाहुः । तत्र श्रुतिः । "रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद्रुद्र एनं भूत्वाग्निरनुत्थाय हन्याद्वास्तोष्पतीयं जुहो" तीति तत्र तत्र रुद्रो महेश्वरो वास्तोष्पतिः। "नमो रुद्राय वास्तोष्पतये" इति दर्शनात् वास्तोष्पतीयं वास्तोष्पतिसम्बन्धिनं गार्हपत्यं हुत्वा प्रयायात् देशान्तरं गच्छेत् एनमजुह्वन्तं रुद्रो ज्वरो भूत्वा हन्यादिति भावः । अत्र रुद्रशब्दो ज्वरवचनः हननश्रुतेः अयं सङ्ग्रहः रोदनादग्नौ रुद्रशब्द रुत्पर्यायदुःखद्रावणत्वेन महेश्वरे रुद्रोद्भवतया मरुत्सु पारिषदेषु च रुद्रसाधारणस्वामित्वेन यज्ञे रोदयतीति रोदयितृत्वमेव रुद्रशब्दस्य ज्वरे प्रवृत्तिनिमित्तम् । क्रूरशब्दपर्यायत्वेन प्रयुज्यमानस्य अणप्रत्ययान्तस्य रौद्रशब्दस्य प्रकृतिर्ज्वरवाचक एव रुद्रशब्द इत्याह। रौद्रमिति पदं तत्प्रकृतिकं ज्वरवाचकरुद्रशब्दप्रकृतिकं ज्वरवाचिनो रुद्रशब्दात् तस्येदमित्यर्थे सति रौद्रशब्दो निष्पन्न इति भावः।

अथवा वायसशब्दवत्तद्धितान्तप्रतिरूपकं शब्दान्तरं भवति यथा वयश्शब्दात्तद्धिते सति न वायसशब्दः किंतु तद्धितान्तप्रतिरूपकं शब्दान्तरं तद्वदित्यर्थः ॥ २७ ॥

वायसशब्द एक एव तद्धितान्तप्रतिरूपकशब्दो नान्यः कश्चिदस्तीत्ययाशङ्कानिवृत्यर्थं तेषां बहुत्वमाह—

**सन्त्येव तद्धितपदप्रतिरूपकाणि**
**भूरीणि भागवतसात्वतसन्निभानि ।**
**स्यात्ताद्दगेव भगवानिति शब्दरूपं**
**षाड्गुण्यहेतुकमपि त्वदुपैति नान्यम् ॥ २८ ॥**

सन्त्येवेति। भागवतसात्वतसन्निभानि तद्धितान्तप्रतिरूपकाणि मैत्रादिपदानि भूरीणि बहूनि। यदाहुः। "वैश्यायां जायते व्रात्यात्सुधन्वाचार्य एव च। भारुषश्च द्विजन्मा च मैत्रस्सात्वत एव च। षष्ठश्च सात्वतो नाम विष्णोरायतनानि च। पूजयेदाज्ञया राज्ञस्सतु भागवतस्मृतः"। इति। भागवतशब्दप्रकृतितया शङ्कयमानं भगवच्छब्दरूपमपि तद्धितान्तप्रतिरूपकमित्याह। स्यादिति। भगवानिति शब्दरूपं ताद्दगेव तद्धितान्तपदप्रतिरूपकमेव भगवच्छब्दस्य भवादिशब्दवत् पूज्यमात्रे रूढत्वात्। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥ इति वचनादैश्वर्यादिषाड्गुण्यवाची भगशब्दः तस्मान्मतुपि सति निष्पन्नो भगवच्छब्दस्तद्गुणके परमपुरुषे वर्तत

इत्याह। षाड्गुण्येति षड्गुणा एव षाड्गुण्यं यथा चत्वारो वर्णाश्चातुर्वर्ण्यं "चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यान" मिति स्वार्थे ष्यञ् तद्धितप्रवृत्तिनिमित्तं यस्य तद्भगवच्छब्दरूपं त्वदन्यं नोपैति नाभिधत्त इत्यर्थः ॥ २८ ॥

सत्तानुषक्तभगवन्निरूपणमुखेन सः। एतत्पदादिकैष्षड्भिः श्लोकैश्श्लोकार्धसंयुतैः ॥ ऐश्वर्यप्रमुखाशेषगुणकत्वन्तु लक्षणम्। प्रतिपादयतीशस्य श्रुतिन्यायपुरस्सरम् ॥

ऐश्वर्यमग्र्यमनुपाधिमती च लक्ष्मी-
र्ज्ञानञ्च वीर्ययशसी च विरागता च।
एते गुणाश्षडपि ते भगसंज्ञयोक्ता-
स्सन्तीत्यनेन भगवन् भगवानसि त्वम् ॥ १९ ॥

अग्र्यं श्रेष्ठं ऐश्वर्यं अनुपाधिमती निरुपाधिका लक्ष्मीः ज्ञानं वीर्ययशसी च बलकीर्ती विरागता वैराग्यं इत्येते भगसंज्ञया भगशब्देनोक्ताः षड्गुणा अपि ते सन्तीत्यनेन हेतुना त्वं भगवानसि ॥ २९ ॥

ऐश्वर्यादिगुणसद्भावे किं प्रमाणमित्याशङ्क्य ईश्वरादिपदश्रुतिरेव प्रमाणमित्याह—

ऐश्वर्यमीश्वरपदश्रुतिरुग्रशब्दो
वीर्यं यशश्शिवपदञ्च तवाभिधत्ते।

सर्वज्ञकामरिपुशब्दसमर्थितौ च
सार्वज्ञरागविरहौ भवतः पुरारे ॥ ३० ॥

ऐश्वर्यमिति ईश्वरपदश्रुतिः ईश्वरपदमिति श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थमपि विप्रकर्षादिति जैमिनिसूत्रोक्त प्रमाणं पदान्तरनिरपेक्षश्शब्द इति श्रुतेर्लक्षणं यश्शब्दश्रवणादेव विनियोगः प्रतीयते स श्रौत इति वचनादीश्वरशब्दश्श्रुतमात्र एव ऐश्वर्यवद्वस्तुवाच्यतयाऽभिधत्ते बोधयतीति ईश्वरपदश्रुतिरैश्वर्यसद्भावे प्रमाणमित्युक्तं अविशेषतया स्वव्यतिरिक्तमखिलमीशितव्यत्वेन गृह्णातीति वा ईश्वरः उग्रशब्दो वीर्यमभिधत्ते नायमुग्रशब्दः क्रूरवचनः वीर्यवचनत्वात् यथैतमधीमहे तथैव हि प्रार्थनीयः उग्रोऽस्युग्रोऽहं सजातेषु भूयासं इति उग्रेभ्यः कश्चिदोजीयानिति च ओजीयान् बलवानित्यर्थः। अयं भावः। उग्रत्वमनभिभवनीयत्वं तच्च वीर्यं बलमन्तरेणानुपपन्नं सद्वीर्यं बोधयतीत्यर्थान्तराविनाभावश्रुतिसामर्थ्यलक्षणमुग्रत्वलिङ्गं वीर्यमभिधत्त इति उग्रशब्द इत्यनेन यद्यप्यत्रापि श्रौतो विनियोगः प्रतीयते तथापि लिङ्गस्यापि श्रुतिकल्पनयैव विनियोजकत्वाङ्गीकारादुग्रशब्द इत्युक्तम्। शिवपदं यशोऽभिधत्ते निश्शेषनिरतिशयसकलकल्याणगुणगणाधारत्वं हि शिवत्वम्। "अथवाऽशेषकल्याणगुणैकघन ईश्वरः। शिव इत्युच्यते सद्भिश्शिवतत्वार्थवेदिभिः" ॥ इति पुराणवचनात् अतस्सकलकल्याणगुणगणवाचि शिवपदं कल्याणगुणगणतया तदन्तर्भूत यशोऽप्यभिधत्ते इति

भावः। भवतस्सार्वज्ञ्यविरागविरहो यथाक्रमेण सर्वज्ञ कामरिपु-शब्दाभ्यां समर्थितौ अभिहितौ। नन्वीश्वरस्य सर्वज्ञत्वं किन्नामेति चेदुच्यते। इन्द्रियादिनिरपेक्षेण सर्वार्थज्ञानं सर्वज्ञत्वम् तदुक्तं वायवीयसंहितायाम्।"दशार्थज्ञानसिद्ध्यर्थमिन्द्रियेष्वेषु सत्स्वपि। त्रिकालभाविनो भावान् स्थूलान् सूक्ष्मानशेषतः। अणवो नैव जानन्ति मलमायावृताधमाः। असत्स्वपि च सर्वेषु सर्वार्थज्ञान-हेतुषु। यद्यथावस्थितं वस्तु तत्तथैव सदाशिवः। अयत्नेनैव जानाति तस्मात्सर्वज्ञ उच्यते"॥ तच्चेश्वरस्य सर्वविषयं ज्ञानं प्रति शून्यत्वान्नव्यञ्जकमपेक्षते सांशयिकमपि न भवति न जातु विपरीतन्तत्। अनीश्वराणां ज्ञानन्तु मलमायादिभिरावृतत्वाद्व्यञ्जकमपेक्षते सांशयिकमपि भवति व्याहतमपि भवति। ईश्वरज्ञानं तु नाद्ध्यक्षं नापि लैङ्गं नापि शाब्दं तत्ज्ञानं सर्वदा सर्ववस्तुषु निर्मलत्वाद्विभाति। तदुक्तं न्यायकुसुमाञ्जलौ उदयनाचार्यैः। "साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्ष्य स्थितौ भूतार्थानुभवे निविष्टनिखिलप्रस्तारिवस्तुक्रमः। लेशादृष्टिनिमित्तदृष्टिविगमप्रभ्रष्टशङ्कातुषश्शङ्कोन्मेषकळङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः"॥ इति। ऐहिक विषयाभिलाषवैमुख्यं कामरिपुत्वम्। अत एतौ सर्वज्ञकामरिपुशब्दौ ज्ञानवैराग्येऽभिदधाते इति भावः॥

३०॥

नन्वु श्रीनामगुणसद्भावे न किञ्चिदुपन्यस्तमित्याशङ्क्य स्वानन्दतृप्तत्वेन विषयविमुखस्य शिवस्य साक्षात् श्रीमानिति

पदश्रुतेरभावेऽपि श्रिया श्रैष्ठ्यस्य स्वान्येषां श्रीप्रदानस्य च श्रुतिष्वभिहितत्वाच्छ्रीमत्त्वमाह—

अर्थश्श्रिया शिव न कोऽपि विरज्यतस्ते
श्रेष्ठस्तया त्वमसि दाशतयीभिरुक्तः ।
लब्धश्रियं जनिम चारुविचित्ररूप-
मभ्यर्चितं तव मरुद्भिरुदाहरन्ति ॥ ३१ ॥

हे शिव विरज्यतो विरक्तस्य ते रञ्जरागे इत्यस्य शत्रन्तस्य रूपं ते श्रिया संपदा न कोऽप्यर्थः प्रयोजनन्नास्ति दाशतयीभिः दशावयवा मण्डला उपाख्या अस्या इति दशतयी ऋक् संहिता तत्सम्बन्धिनीभिः तत्पठिताभिरित्यर्थः। श्रेष्ठो जातस्येत्यादि ऋग्भिः तया श्रिया त्वं श्रेष्ठः श्रुतोऽसि। "श्रेष्ठो जातस्य रुद्र श्रियासि तपस्तमस्तपसां वज्रबाहो"। इति। अस्यार्थः हे वज्रबाहो वज्रबाहुमूर्तिमास्थाय जातस्य व्यत्ययेन प्रथमार्थे षष्ठी जातस्सन् इन्द्ररूपेण प्रादुर्भूतस्सन् तपसां तपस्तमस्तुत्यानां स्तुत्यतमः त्वं श्रिया श्रेष्ठोऽसीति श्रियं संपदं लब्धुं चारु शोभनं विचित्ररूपं तव जनिम महालिङ्गाकृतिप्रादुर्भावं मरुद्भिरर्चितमुदाहरन्ति। तथा च श्रुतिः। "तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारु चित्रम्। पदं यद्विष्णोरुपमन्निधायि तेनपासि गुह्य न्नाम गोनाम्"। इति। हे रुद्र चारु शोभनं चित्रं चित्ररूपं यत्ते जनिम महालिङ्गाकृतिप्रादुर्भावोऽस्ति तव तज्जनिम श्रिये

श्रियं लब्धुं मरुतो मर्जयन्त अभिषेकादिना महालिङ्गार्चनं कुर्वन्त इत्यर्थः पदं यद्विष्णोरित्यत्रविष्णोः परमं पदं लिङ्गमिति सनत्कुमारसंहितायां विष्णुवचनम्। "तत्पदंलिङ्गमाख्यातं शिवो येनैव दृश्यते"। इति। ब्रह्माण्डपुराणे। "तल्लिङ्गस्यापि माहात्म्यं युवां द्रष्टुं न हि क्षमौ। सूरयो यत्प्रपश्यन्ति तद्विष्णोः परमं पदम्" ॥ ३१ ॥

एवं भगवच्छब्दस्य प्रवृत्तिनिमित्तस्य षाड्गुण्यस्येश्वरैकाश्रयत्वमुपपाद्यान्येषामपि सत्यादिगुणानान्तदेकाश्रयत्वमाह—

**सत्यं क्षमा धृतिरधिष्ठितिरात्मबोध-**
**सृष्टिर्विरागतपसी मतिरीश्वरत्वम् ।**
**नत्वद्वियन्ति न कदाचिदपैति धर्मः**
**किन्तन्नयद्भवति ते गुणसम्मतेषु ॥ ३२ ॥**

सति धर्मे साधु सत्यं वेदवाक्यं तत्कर्तृकत्वात् तद्गुण इत्युच्यते क्षमा भक्तकृतापराधसहिष्णुत्वं धृतिः अप्रयत्ने भूधरादिधारणं अधिष्ठितिस्सर्वान्तर्यामितयावस्थानं आत्मबोधः स्वसमवेतनित्यज्ञानेन स्वस्वरूपज्ञानं ईश्वरज्ञानस्य नित्यत्वेनाफलत्वान्नप्रमात एव प्रमाणन्नभवति अकरणत्वात् अत एव तदाश्रय ईश्वरो न प्रमातेति चेत् न समीचीनानुभवत्वेनेश्वरज्ञानस्य प्रमात्वं व्यवस्थितं प्रमाकरणन्तु न भवति प्रमायास्सम्बन्धभावात् तदाश्रयस्येश्वरस्य प्रमातृत्वे न काचित् क्षतिः एवन्तर्ही-

श्वरस्य तदाश्रयत्वेन प्रमातृत्वमेव न प्रमाणमिति चेत् न प्रमाया अयोगव्यवच्छेदेन सम्बन्धस्य विद्यमानात् प्रमाणं प्रमा नित्या वानित्या वा भवतु तर्हि प्रमीयतेऽनेनेति प्रमाणं प्रमिणोतीति प्रमाता इति कारशब्दत्वमनयोः कथमिति चेत् न एतस्य व्युत्पत्तिमात्रनिमित्तत्वात् अन्यथाऽस्मदादिष्वपि सर्वत्र स्वातन्त्र्याभावात् प्रमातृत्वव्यवहारो न स्यादित्यलमतिविस्तरेण। सृष्टिः जगन्निर्मातृत्वं ननु सृष्टिः विधातुः कृत्यमिति चेन्न विधातुरपि साक्षाद्विधाता स एव। तथा च महोपनिषदि श्रूयते। "ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः"। इति। विरागो वैराग्यं तपो जगन्निर्माणे अव्याहतसङ्कल्पं इति तदुक्तं वायवीयसंहितायाम्। "प्रकृत्यवस्थापि च कारणानां या च स्थितिर्या च पुनः प्रवृत्तिः। तत्सर्वं प्राकृत वैभवस्य सङ्कल्पमात्रेण महेश्वरस्य"॥ इति। अत एवैतदपि निरस्तम्। "कर्ता चेत्तत्प्रवृत्यर्थं विकारीत्यादिदूषणम्। कर्तृत्वं द्विविधं प्रोक्तं सङ्कल्पात्कारणादपि। न हि सङ्कल्पमात्रेण कुलालैः क्रियते घटः। शिवस्सङ्कल्पमात्रेण करोति सकलं जगत्"। इत्यादि। समस्तोपाधिशून्यान्निर्मलत्वाद्विकारादिदोषो नास्ति निरुपाधिकत्वात्तस्य कर्तृत्वन्नेष्यत इति चेत् न कर्तृत्वप्रतिबन्धकाद्युपाधेरभावात् प्रत्युत कर्तृत्वमेवेति सर्वमनवद्यम्। मतिः कार्यालोचनं ईश्वरत्वमीशता च इति एतानि त्वत्तो न वियन्ति न गच्छन्ति धर्मं इत्यणिमाद्यष्टकं कदाचिदपि त्वत्तो नापैति न वियुज्यते गुणसम्मतेषु गुणत्वेन सम्मतेषु अत्ते न भवति नास्ति किन्त-

त्सर्वे गुणास्त्वय्येव सन्तीत्यर्थः। तथापि पुराणवचनम्। "नास्ति यद्यदकल्याणं तत्तदस्य कदा चन कल्याणसकलञ्चास्ति परमात्मा शिवो यतः"॥ इति। अत्र श्लोके विरागशब्देनामुष्मिकविषयवैमुख्यमुच्यते पूर्वश्लोके तु रागविरहशब्देनैहिकविषयवैमुख्यमुच्यते। अतो न पौनरुक्त्यमिति सत्यादिगुणानामीश्वरविषयत्वं वाचस्पतिमिश्रैरप्युक्तम्। "षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि। शाश्वताय नमस्कुर्मः वेदाय च भवाय च"॥ इति। वेदस्य षडङ्गानि शीक्षादीनि प्रसिद्धानि ईश्वरस्य। "सर्वज्ञता तृप्तिरनादिबोधस्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाष्षडाहुरङ्गानि महेश्वरस्य"। इति। "ज्ञानं वैराग्यमैश्वर्यं तपस्सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे"। इति। अव्ययानि गुणानि पुराणेषु प्रसिद्धनि तस्मात्सर्वगुणरत्नानां शिव एव रत्नाकरः। तदुक्तम्।"औदार्यवीर्यगाम्भीर्यमाधुर्यमकरालयः"। इति॥ ३२॥

ज्ञानवैराग्यसम्बन्ध एव भगवच्छब्दप्रवृत्तिनिमित्तं न षाड्गुण्यमिति येवदन्ति तेषांमतेऽपि ज्ञानवैराग्याधारे त्वय्यपि भगवच्छब्दो वर्तत एवेत्याह—

नैवेश्वरान्नयशसा महतो न वीरा-
न्न श्रीमतः क्षितिपतीनपि सार्वभौमान्।
अन्यादृशानपि महेश्वर वीतरागा-
न्मज्ञानवतो भगवतः प्रवदन्ति वृद्धाः॥ ३३॥

वृद्धाः बहुश्रुत्यादिगुणवृद्धाः ईश्वरानैश्वर्यवतोपि पुरुषान्भगवतो भगवच्छब्दवाच्यान्नैव प्रवदन्ति यशसा महतः यशोधिकान् भगवतो न प्रवदन्ति वीरान् सार्वभौमान् सर्वभूमीश्वरान् "तस्येश्वर" इति सूत्रेण सर्वभूमिशब्दादीश्वर इत्यस्मिन्नर्थेऽणूप्रत्ययः श्रीमतस्सम्पन्नान् क्षितिपतीनपि भगवतो न प्रवदन्ति। किन्तु अन्यादृशान् उक्तगुणरहितान् वीतरागान् विषयाभिलाषरहितान् प्रज्ञावतः ज्ञानवतः पुरुषान् भगवच्छब्दवाच्यान्प्रवदन्ति। अतो ज्ञानवैराग्याधारे त्वय्यपि भगवच्छब्दो वर्तत एवेति हृदयम् ॥ ३३ ॥

भगवच्छब्दस्येश्वरवाचकत्वे श्रुतिरप्यस्तीत्याह—

**आथर्वणा मदनशासन निब्रुवाणा**
**नामानि नाम भगवानिति ते निराहुः।**
**अत्याश्रमोपनिषदाह भगेश्वर त्वा-**
**न्नैघन्टुकाश्च भगवन्तमुशन्ति पूज्यम् ॥ ३४ ॥**

आथर्वणाः अथर्ववेदमधीयानाः ते नामानि महादेवादिनामानि। "अथ कस्मादुच्यते महादेवः यस्सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते। तस्मादुच्यते महादेवः"। इत्यादि नामानि निब्रुवाणाः। "अथ कस्मादुच्यते भगवान् यस्सर्वान्भावान्निरीक्षति आत्मज्ञानं निरीक्षयति योगं गमयति तस्मादुच्यते भगवान्"। इति नाम निराहुः निब्रुवन्ति तस्माद्योगरूढिभ्यामीश्वर एव भगवच्छब्दो वर्तत इति श्रुतेरर्थः। ननु नारा-

यणोऽपि भगवानिति व्यवह्रियते तत्प्रतिपादकपुराणस्यापि भागवतमिति व्यवहारात् ईश्वर एव भगवच्छब्दवाच्यः कथमिति चेन्मैवं श्रुत्यामीश्वर एव भगवच्छब्दवाच्य इति प्रतिपादनादीश्वर एव भगवच्छब्दव्यवहारो वेदमूलकः अन्यत्र तन्नास्ति भागवतमिति तत्पुराणस्य नाममात्रञ्चेद्विष्णुपुराणस्यापि भागवतत्वं दुर्वारं प्रसज्येत वेदमूलव्यवहार एव वृद्धैरङ्गीक्रियते न तु मूलहीनोपि शुक्रभगवानिति शुक्रस्सर्वैरपि व्यवह्रियते न तावता भगवच्छब्दवाच्यत्वं वृद्धा अङ्गीकुर्वन्तीत्यलमतिविस्तरेण। "अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूळनन्तथा। त्रिपुण्ड्रधारणञ्चापि वदन्त्यत्याश्रमं बुधाः। अत्याश्रमिभ्यश्शान्तेभ्यो वक्तव्यं ब्रह्मवेदनम्। नाप्रशान्ताय दातव्यं नाभक्ताय कदा च न"। इति पुराणवाक्योक्तलक्षणलक्षितात्याश्रमाधिकारिणं प्रत्युक्तायामत्याश्रमोपनिषद्यपीश्वरस्य भगेशशब्देनाभिहितत्वाद्भगवच्छब्द ईश्वरमभिधत्त इत्याह। अत्याश्रमेति तथाच। "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्"। इति अत्याश्रमाधिकारिणं प्रति वचनादत्याश्रमोपनिषन्नामधेया। धर्मावहं पापनुदं भगेशम्। इति मन्त्रोपनिषत्त्वां भगेशमाह। नैघण्टुकमतेनापि भगवच्छब्दस्त्वामभिधत्त इत्याह। नैघण्टुका इति नैघण्टुकाश्च भगवन्तं पूज्यमुशन्ति वदन्ति धातूनामनेकार्थत्वात्। वष्टि वागुरिरित्यादाविवात्रापि वष्टिः कान्तिवचनोप्यभिधानार्थे वर्तते। तत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते। पूज्यः। इति निघण्टुः। "नमस्ते अस्तु भगवतः"।

"अधीहि भगवो ब्रह्म" इत्यादि श्रुतिष्वपि भगवच्छब्दः पूज्ये प्रयुज्यते तद्धितान्तप्रतिरूपकभगवच्छब्दो यद्यपि श्रुतिषु निघण्टुषु च पूज्यमात्रे प्रयुज्यते तथापि वाङ्मनःकायनिमित्तस्तुतियोगप्रमाणलक्षणायाः पूजायास्त्वच्छेषित्वस्य वक्ष्यमाणत्वात्त्वयि मुख्यया वृत्या भगवच्छब्दो वर्तते। अन्यत्रत्वत्सन्निकर्षवशाद्वर्तत इति हृदयम्। तस्मात् षाड्गुण्यं वा ज्ञानवैराग्ये वा पूज्यत्वं वा यद्यद्भगवच्छब्दवाच्यत्वगुणजातमस्ति तत्सर्वं परमेश्वरे वर्तते ननु। "अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः। सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः"। इति। मुकुन्दे एव भगवच्छब्दवाच्यत्वस्य गुणजातस्य विद्यमानत्वात् गुणसामग्र्यकृतलक्षणमतिव्याप्तमिति चेन्न। अथ कस्मादुच्यते भगवानित्यादि श्रुतेरनपेक्षतया प्रमाणत्वेन तद्विरोधे विरोधाधिकरणन्यायेनैतत्पुराणस्य बाधोपपत्तेः तस्मादिदं लक्षणं नातिव्याप्तम्। सेशं पुनाति। इति यदुक्तं तदसमञ्जसम्। तथाहि। महालिङ्गप्रादुर्भावे ब्रह्मविष्णुभ्यामनेकवर्षान्वेषणेनापि आद्यन्तयोरदर्शनेन सहस्रकमलार्चननियमभङ्गभीत्या विष्णुना स्वनेत्रमुत्पाट्य परिपूजननियमपरिपूरणसन्तुष्टेन शम्भुना चक्रप्रदानेन बाणसारथ्याद्युपकरणभूतैर्ब्रह्मविष्ण्वादिभिः अज्ञातनिरीक्षणमात्रत्रिपुरदाहेन समुद्रमथनोद्भूतकालकूटविषकीलाभिर्दग्धसर्वाङ्गेन्द्रोपेन्द्राद्यपेक्षितकृपावशेन तादृशकालकूटकबळीकरणेन ब्रह्मविष्ण्वाद्यजेयकामदाहेन देव्यास्स्वयंवरे शिशुरूपेण परमेश्वरेण विष्ण्वादिदेवताङ्गस्तम्भनेन

मत्स्यकूर्मवराहनारसिंहविष्वक्सेनादिनिग्रहेण ब्रह्मणः पञ्चमशिरच्छेदापदानेनेत्याद्यनेकमहत्वप्रतिपादकैरनेकश्रुतिपुराणैर्महादेवस्यमहत्वे निश्चिते न्यूनतानुपपत्तेः । "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे प्रथिवीं त्यजेत्" ॥ इति न्यायेनानेक श्रुतिपुराणविरोधात् शिवस्य विष्णुपादोदकधारणप्रतिपादकमप्रमाणं कृष्णस्य नारदादिपादोदकधारणादिवद्विष्णुस्तुतिपरं वा यदा गङ्गा हैमवती जाता तदा शिरसा धृता । तथाच रामायणे । "शिरसा धारयिष्यामि शैलराजसुतामहम् । भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः"। इति जन्मान्तरे गङ्गाया-विष्णुपादोदकप्रसङ्ग इति यत्किञ्चिदेतत् यथा गङ्गा पावनी एवं विष्णुपादोदकमपि पावनमित्यत्र तात्पर्यं गङ्गादिसर्वनदीनामुत्पत्तिः परमेश्वरादेवेति माण्डूक्योपनिषदि श्रूयते । "अतस्समुद्रा गिरयश्च सर्वे ऽस्मात्स्यन्दन्ते सिन्धवस्सर्वरूपाः" । इति । महोपनिषद्यपि । "यस्माज्जाता न परा" इति पुराणेष्वपि ईश्वरस्य ब्राह्मण्यत्वावगमात् । "त्वं देवेषु ब्राह्मणोसि अहं मनुष्येषु"। इति प्रपदमन्त्रे "त्रिवृत्स्तोम इन्द्रस्य भागोसि विष्णोराधिपत्यं क्षत्रं स्मृत" मिति संहितायाम् । महोपनिषदि । "ब्रह्माधिपतिः" । इति पदेन ब्रह्म चासावधिपतिश्चेति कर्मधारयसमासाश्रयणेन ब्राह्मणत्वब्राह्मणाधिपत्यप्रतिपादनेन सर्वेषां ब्राह्मणानां कूटस्थत्वात्तेन परमेश्वरेणापरवर्णपादोदकधारणं क्रियत इति ब्राह्मणाभिजनः कश्चिदपि नवदतीत्यलमतिप्रसङ्गेन ॥ ३४ ॥

पूज्यवाचिभगवच्छब्दनिरूपणप्रसङ्गेन पूजाया अपि महेश्वरैकशेषित्वमाह। अथवा यागादिनिबन्धनायाः पूजायाः यतस्तच्छेषित्वमतः पूज्यवाच्यपि भगवच्छब्दस्त्वयेव वर्तत इत्याह—

**पूजा तमुष्टुहिवता विहिता महेश**
**मन्त्रेण वाङ्मनसकायनिबन्धना ते।**
**सर्वाभिरप्युपनिषद्भिरुपासनोक्ता**
**नारायणोपनिषदं परिभावयामः॥ ३५॥**

तमुष्टुहिवता तमुष्टुहीति प्रतीकवता मन्त्रेण वाङ्मनसकायनिबन्धना वाक्च मनश्च वाङ्मनसे अचतुरेत्यादिना अच्प्रत्ययान्तत्वेन निपातत्वादस्य साधुत्वं वाङ्मनसे च कायश्च वाङ्मनस्कायाः ते निबन्धनं कारणं यस्यास्सा पूजा विहिता स च तमुष्टुहीति मन्त्रः ऋक्संहितायामेवाम्नायते। "तमुष्टुहियस्स्विषुस्सुधन्वा यो विश्वस्य क्षयति भेषजस्य। यक्ष्वामहे सौ मनसाय रुद्रं नमोभिर्देवमसुरन्दुवस्य"। इति। अस्यार्थः यस्विषुः विष्णुसोमाग्निसायकः। तत्र श्रुतिः। "त इषुं नमस्कुर्वताऽग्निमनीकं सोमं शल्यं विष्णुं तेजनं ते ब्रुवन्"। इति। अनीकं बाणशल्यमुखं शल्यं कृष्णायसनिर्मितं बाणाग्रस्थापितं तेजनं लोहपत्रव्यतिरिक्तं काष्ठं अथवा विष्णुमात्रसायकः। तथा च कर्णपर्वणि। "बन्धयित्वा हरिं विष्णुमव्ययं यज्ञवाहनम्। शरं प्रकल्पयाञ्चक्रे विश्वकर्मा महामनाः"। इति। सुधन्वा। मेरुधन्वा। तथा च लैङ्गे। "शैलेन्द्रः

कार्मुकञ्चासीत् ज्या भुजङ्गाधिपः स्वयम्"। इति। अथवा संवत्सरधन्वा। तथा च कर्णपर्वणि।"विचित्रमृतुभिष्षड्भिः कृत्वा संवत्सरं धनुः" । इति। अथवा ओङ्कारधन्वा। तदुक्तं शान्तिपर्वणि। "स कृत्वा धनुरोङ्कारं सावित्रीं ज्यां महेश्वरः। बाणैः पञ्चाक्षरैः तूर्णं त्रिपुरं जितवान् पुरा"। विश्वस्य भेषजस्य संसारव्याधिविनाशकस्य ज्ञानाख्यस्य सर्वभेषजस्य क्षयति निवासाय भवति क्षयनिवासगत्योरिति धातुः ईष्टे शक्त इत्यर्थः तमु तमेव हे अन्तरात्मन् स्तुहि अनेन वाङ्निबन्धना पूजोक्ता। सौमनसाय महे उत्सवे तमेव रुद्रं यक्ष्व तमेवोद्दिश्य द्रव्यत्यागं कुर्वित्यर्थः अनेन मनोनिबन्धना पूजा उक्ता। यागो नाम द्रव्यत्यागः तत्र मन एव कारणं असुरं प्राणदातारं रा दान इत्यस्माद्धातोरातोनुपसर्गे क इति कः नमोभिः प्रणामैः तमेव देवं दुवस्य परिचर धातूनामनेकार्थत्वात् अनेन कायनिबन्धना पूजोक्ता। तदुक्तं वायवीयसंहितायाम्। "साम्बपूजा त्रिधा प्रोक्ता मनोवाक्कायसाधनैः। शिवरूपादिचिन्ता या सा सेवा मानसी मता। जपादिर्वाचिकी सेवा कर्मपूजादि कायिकी। सेयं त्रिसाधना सेवा शिवधर्मश्च कथ्यते। स तु पञ्चविधः प्रोक्तः शिवेन परमात्मना। तपः कर्म जपो ध्यानं ज्ञानञ्चेति समानतः। कर्म लिङ्गार्चनादीनि तपश्चान्द्रायणादिकम्। जपस्त्रिधा शिवाभ्यासचिन्ताध्यानं शिवस्य तु। शिवागमोक्तं यत् ज्ञानं तदत्रज्ञानमुच्यते। श्रीकण्ठेन शिवेनैव शिवायै स शिवागमः। शिवाश्रितानां कारुण्यात् श्रेयसामेकसा-

धनम् । ततो विवर्द्धयेद्भक्तिं शिवे परमकारणे । त्यजेच्च विषयासङ्गं श्रेयोर्थी मतिमान्नरः" । इत्यादि । यद्यपि मन्त्रस्य प्रयोगसमवेतार्थस्मारकत्वेन विधायकत्वन्नास्ति तथाप्यस्मादेव मन्त्रात् वाङ्मनःकायैरीश्वरं पूजयेदिति विधिरुपरिधारणविधिवत्कल्पयितव्यः तथा च प्रेताग्निहोत्रे मन्त्रे श्रूयते । "अधस्तात् समिधञ्च धारयन् दक्षिणेन विहारमनुद्रवति उपरि हि देवेभ्यो धारय" तीति विज्ञायत इति तत्र पैतृकस्य हविःपात्रस्याधस्तात् समिद्धारणं विधाय तद्वाक्यशेषे समिधो हविष उपरि धारणं दैवे कर्मणि यच्छ्रुतं तत्किमर्थवादः उत उपरिविधिरिति संशयः तत्राधोधारणविधिः स्तावकत्वेन तदेकवाक्यतालाभादर्थवाद इति पूर्वः पक्षः यत्र प्रसिद्धार्थोनूद्यते तत्र स्तुतिर्युक्ता उपरिधारणन्न क्वापि प्रसिद्धं अतस्तावकतायोगाद्वाक्यभेदमभ्युपगम्यापूर्वविधिः कल्पितः एवमत्राप्यपूर्वार्थत्वेन विधिः कल्पयितुं शक्यत इति बोद्धव्यम् ॥

एतत्पादादिकैष्षडभिश्श्लोकैश्श्लोकार्थसंयुतैः । ऐश्वर्यादिगुणानां तु लक्षणं प्रतिपादितम् । अशेषोपनिषत्प्रोक्तोपासनोक्तिपुरस्सरम् । याज्ञिक्यां प्रतिजानीते तस्यां प्रोक्तामुपास्यताम् । सर्वाभिरिति ब्रृहदारण्यकादिभिः सर्वाभिरुपनिषद्भिः उपासनोक्ता । तथा च बृहदारण्यके । "स होवाच गार्ग्यो यश्चासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास" इति "स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास" इति । बह्वृचारण्यके च । "एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते एतमेवाग्नावध्वर्यव एतंमहाव्रते

छन्दोगा एतमस्यामेतन्दीव्येतं वायावे तमाकाश एतमप्सोतमोषधी-ष्वेतं वनस्पतिष्वेतञ्चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मे-त्याचक्षते"। इति। तलवकारोपनिषद्युपासना श्रूयते। "केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः। केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं को हि देवो युनक्ति॥ यद्वाचा नभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपा-सते॥ यन्मनसानमनुते येनाहुर्मनसो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ यत् प्राणेन न प्राणिति येन प्राणः प्राणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥ स तस्मिन्नेवाकाशे स्त्रियमा जगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति॥ ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयत्वमिति तद्वनमित्यु-पासितव्यम्"। इति। मुण्डकोपयिषदि। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमंसाम्यमुपैति"। इति। "सदेव तत्परं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः"। अथर्वशिरसि श्रूयते। "द्यावाप्रथिवी जनयन् देव एकः। तदेतदुपासितव्यम्" अथर्वशि-खायां श्रूयते। "शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परि-

त्यज्य" कैवल्योपनिषदि श्रूयते । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिम ।" इति । श्वेताश्वतरोपनिषदि श्रूयते । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"। तैत्तरीयकोपनिषदि । "आकाशशरीरं ब्रह्म। सत्यात्मप्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम्"। इति । प्राचीनयोग्योपास्व । ऐतरेयके श्रूयते । "कोयमात्मेति वयमुपास्महे"। इति । एवं सर्वोपनिषदुक्तप्रकारेण उपासना श्रूयते । नारायणोपनिषदं परिभावयामः उपपत्तिभिरनुचिन्तयामः नन्वनेकासूपनिषत्सु सतीषु नारायणोपनिषत्परिशीलने आचार्यस्य कोहेतुरिति चेदुच्यते । एतद्वै महोपनिषदं । इति । उपनिषदन्तरेभ्य एतस्यामहत्वश्रवणात् महोपनिषदि नारायणादिभिः महेश्वरस्यैवोपास्यत्वे निश्चिते सति सर्वोपनिषदामर्था एतदनुसारेण निश्चिता इत्याचार्यस्याभिप्रायः ॥ २५ ॥

श्लोकानामथ विंशत्या मीमांसन्यायपूर्वकं । याज्ञिक्योपनिषत्प्रोक्तोपास्यत्वं वक्ति लक्षणं । नारायणोपनिषदीति महेश्वरोपासनाविषयास्त्रयोनुवाकास्समाम्नायन्ते । "अणोरणीयान् ।" "सहस्रशीर्षं देवं"। "ऋतं सत्यं"। इति । तत्र प्रथमानुवाकोपक्रमे विविधपरिणामप्रपञ्चाधिष्ठातृत्वेन तत्परिणामवत्तयास्तवनोपपत्तेः अणीयस्त्वादिगुणयुक्तात्माधिष्ठातृत्वादात्मशब्देनोपचर्यमाणं कर्मभिरपरामृष्टं निरतिशयमहिमाशालिनं महेश्वरमभिमतफलदातृ-

त्वेन प्रतिपाद्यस्यैव प्रसादादात्मयाथार्थ्यज्ञानविगळितनिखिलशोकः पश्यतीत्युक्तं मन्त्रो भवति च श्वेताश्वतराणाम्। "यथैव बिम्बममृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्तम्। तद्वात्मतत्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः। यदात्मतत्वेन तु ब्रह्मतत्वं दिवोपमेनेह युक्तः प्रपश्येत्। अजं ध्रुवं सर्वं तत्वेषु शुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः"। इति। आत्मज्ञानेन प्रकृतिसम्बन्धविगळनोपायापरिज्ञानजन्मानं विषादमपहाय महेश्वरसाक्षात्कारादखिलैरपि बन्धनैः क्लेशादिभिर्मुच्यत इत्यर्थः। "अथ सप्त प्राणा" इत्यादिना "तेनेदं पूर्णं पुरुषेण सर्वम्"। इत्यन्तेन तस्यैव सकलजगदुत्पत्तिहेतुत्वादिकमनेकप्रकारमैश्वर्यमभिहितं ततश्च न कर्मणेत्यादिना यतात्मनः पुरुषानधिकृत्य विषयत्यागनिबन्धनामृतत्वमुक्त्वा वेदान्तविज्ञानेत्यादिना वेदान्तश्रवणजनितविनिश्चितार्थतत्वात्सर्वकर्मसन्यासपुरस्सराद्योगादेव विशुद्धान्तःकरणाः परार्द्धद्वयं यावदवस्थाय ब्रह्मलोके ब्रह्मकल्पस्यावसाने सर्वस्मादधिकममृतशब्दवाच्यं महेश्वरं प्राप्य मुच्यन्त इत्युक्तं अमृतशब्दो महेश्वरवचनः यथा जाबालोपनिषदि। "अथैहैनं ब्रह्मचारिण ऊचुः किं जप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यश्शतरुद्रीयेणेति एतानि हवा ऽमृतस्य नामधेयान्येतैर्हैवा अमृतो भवति"। इति। महोपनिषदि। "शृण्वन्ति विश्वे ऽमृतस्य पुत्राः"। इति। अथ योगशब्देन प्रस्तुतममृतप्राप्त्युपायभूतमनिर्दिष्टनामरूपविषयं साधारणमुपासनं दहरमित्यादिना विहितं किं तदुपासितव्यमित्यपे-

त्तायां यद्वेदावित्यादिना प्रणववाच्यो महेश्वर इत्युपदिष्टं यद्वेदादावित्यत्र य इति लिङ्गव्यत्ययः। "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा"। इति हि स्मृतिः। तस्य प्रकृतिलीनस्य प्रकृतौ स्वभावे लीनस्य अवस्थितस्य उपसंहृतसकलविकारप्रपञ्चस्वरूपेण नादात्मना तिष्ठत इत्यर्थः य परः परमात्मतया वाच्यः स महेश्वर उपास्य इत्युपदिष्टं भवति तदिहमहेश्वर इत्युपास्यवस्तुनः संज्ञा कृता रूपञ्च परस्तादभिधास्यते। "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गळम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः"। इति। ऋतं सत्यं मनोविपर्यासरहितं परं ब्रह्म पूर्वोक्तदहराकाशे शेत इति पुरुषं शक्तिमय्या शबळाकारतया कृष्णपिङ्गळं कृशानुरेतस्तया चोर्ध्वरेतसं त्रिलोचनतया विरूपाक्षमिति यदेतदुपासनाविधानवाक्यं यच्च कृष्णपिङ्गळत्वादिरूपविशेषसमर्पणन्तदुभयमपि स्वाभिधेयानुगुणादर्थाद्दते मध्यमानुवाकोपन्यस्तमभिधात्वन्न सहते यावदुपसंहारमुपक्रमानुवृत्तेरवश्यम्भावादर्थप्रतिग्रहेष्टिवाक्यैर्हि यावतोऽश्वान्प्रतिगृह्णीयादिति प्रतिग्रहीतृगोचरोप्यश्ववचनोश्वशब्दः प्रथमावगतदातृपरोधदातृगोचरो नीयते किं पुनरिहोपक्रमोपसंहारावगतमहेश्वरोपासनानुरोधेन मध्यमानुवाको नेतव्य इति तदेत्सर्वमभिप्रेत्याह—

**वाक्यं यदाह दहरान्तरुपासनन्ते**
**यद्वा समर्पयति रूपविशेषमस्मै।**

. अन्तर्गतैरपि तदोपयिकाभिधेयै-
भार्व्यं वचोभिरिति वाक्यविदां प्रवादः ॥३६॥

"दहरं विपाप्मं वरवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं। तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्"। इति। यदुपासनोपक्रमवाक्यं दहरान्तर्हृत्पुण्डरीकमध्ये उपासनमाह ऋतं सत्यमिति यच्चोपसंहारवाक्यं अस्मै उपासनीयाय उपासनां कर्तुं कृष्णपिङ्गळत्वादिरूपविशेषं समर्पयति रूपविशेषमन्तरेणोपासनयाः कर्तुमशक्यत्वात्। तदुक्तं वायवीयसंहितायां। "न ह्यसौ निष्कळस्साक्षाच्छिवः परमकारणः। स्वाकारेणानुभाव्यो नु केनाप्यनुपलक्षितः। प्रमाणगम्यतामात्रन्तत्स्वभावोपपादकम्। न तावतानपेक्षाधीरूपलक्षणमन्तरा। आत्मोपलक्षणं साक्षान्मूर्तिरेव हि काचन। शिवस्य मूर्तिर्मूर्त्यात्मा यत्त तस्योपलक्षणम्। यथा काष्ठाद्यनारूढो न वह्निरुपलभ्यते। एवं शिवोप्यमूर्त्यात्मा ह्यनारूढ इति स्मृतिः। यथाग्निमानयेत्युक्ते ज्वलत्काष्ठादृते स्वयम्। नाग्निरानीयते तद्वत्पूज्यो मूर्त्यात्मना शिवः। अत एव हि पूजादौ मूर्त्यात्मपरिकल्पनम्। मूर्त्यात्मनि कृतं साक्षाच्छिव एव कृतं यतः। लिङ्गादावपि तत्तुल्यमाचार्येपि विशेषतः। तत्तुमूर्त्यात्मभावेपि शिवोऽस्माभिरुपास्यते। यथा ऽनुगृह्यते सोपि मूर्त्यात्मा परमेष्ठिना। तथा मूर्त्यात्मनिष्ठेन शिवेन पशवो वयम्। लोकानुगृहणायैव शिवेन परमेष्ठिना। सदाशिवादयस्सर्वे मूर्त्यात्मानोप्यधिष्ठिताः। तेपि मूर्त्यात्मभावेन लब्धास्स्वयमनुग्रहम्। अन्यात्मायोनुग्रह्णन्ति

शिवेन समधिष्ठिताः। आत्मनामेव भोगाय मोक्षाय च विशेषतः। तत्वातत्वस्वरूपेषु मूर्त्यात्मसु शिवान्वयः"। इति। कृष्णपिङ्गळत्वादिरूपं समर्पयति ददाति प्रतिपादयतीत्यर्थः। अन्तर्गतैरुपक्रमोपसंहारमध्यगतैः वचोभिरपि तदौपयिकाभिधेयैस्तदनुगुणार्थैर्भाव्यं भवितव्यमिति वाक्यविदां मीमांसकानां प्रवादः उद्घोषः। अयं भावः दह्रमित्युपक्रमवाक्येन हृत्पुण्डरीके यदनिर्दिष्टनामरूपं तद्वस्तूपासितव्यमित्युक्त्वा ततः किंविधनामकन्तद्वस्त्वित्याकांक्षायां "योवेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परस्समहेश्वरः"। इति वाक्येन वेदोपक्रमे वेदसमाप्तौ च कर्तव्य ओंकारः नोच्चैस्वरादयो वेदधर्मास्तत्रोपक्रमानुरोधेनोपसंहारवाक्यं नीयते किं पुनरिहोपक्रमोपसंहारावगतमहेश्वरोपासनानुरोधेन मध्यमानुवाको नेतव्यः। इति॥ ३६॥

ननु मध्यमानुवाके नारायण उपास्यः प्रतीयत इत्याशङ्क्योपासनाविधितत्फलयोरदर्शनान्मैवमित्याह—

नारायणस्य यदुपास्यतया ऽभिधानं
यद्वा फलन्तदिह नोपलभे कथञ्चित्।
उत्पत्तिशिष्टभवदन्वयमन्यगामि
शक्यंमहेश्वर न कर्तुमुपासनन्ते॥ ३७॥

इह मध्यमानुवाके नारायणस्य यदुपास्यतयाऽभिधानं यच्चफलन्तदेतदुपास्यत्वमुपासनाफलं कथञ्चिन्नोपलभे न पश्यामि

ईश्वरोपासने तु दहरं विपाप्ममित्युपासनाविधिवाक्यम्। "न कर्मणा न प्रजया धनेन त्यागेनैके ऽमृतत्वमानशुः। परेण नाकन्निहितं गुहायां विभ्राजते यद्यतयो विशन्ति। वेदान्तविज्ञानसुनिश्चितार्थास्सन्यासयोगाद्यतयश्शुद्धसत्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे"। ब्रह्मलोके परस्य ब्रह्मकल्पस्यावसानकाले सर्वोत्कृष्टामृतशब्दवाच्यं महेश्वरं प्राप्य मुञ्चन्तीति मुक्तिरूपं फलञ्चोक्तमीश्वरस्यामृतशब्दवाच्यत्वमुक्तम्। जाबालोपनिषदि श्रूयते। "एतानि हवा अमृतस्य नामधेयान्येतैर्हवा ऽमृतो भवति"। इति। ऋगुपनिषद्यपि। "रेतोधा विष्णुरमृतस्य नाभिः"। इति "कुहूर्देवानाममृतस्य पत्नीः" इति। "अपामसोममममृता अभूम"। इति। ननु दह्रं विपाप्मं वरवेश्मभूतं इत्यादिवाक्यमेव नारायणस्य उपास्यत्वविधायकं किन्नस्यादित्याशङ्क्य एतदुपक्रमोक्तोपासने महेश्वरावरुद्धे सति न नारायणादिदेवतान्तराणामवकाशः इत्याह। उत्पत्तीति उत्पत्तिशिष्टभवदन्वयं दहरं विपाप्मं यद्वेदो इति यदेतदुपासनोत्पत्तिवाक्यन्तत्र शिष्टो विहितो भवदन्वयो भवन्नामकगुणसम्बन्धो यस्य तदुपासनं आमिक्षावरुद्धे विश्वदेवदेवताकयाग इवान्यगामि कर्तुं न शक्यं तथाहि द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्। गुणश्चापूर्वसंयोगे वाक्ययोस्समत्वात् चातुर्मास्येषु श्रूयते तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमिति हि ब्राह्मणदधिसम्बन्धात् क्षीरनीरयोर्भेदे सति यो घनीभूतः क्षीरांशः सा ऽमिक्षा तस्याश्च वि॰

देवा देवता: तत्र यत्पृथग्भूतं नीरन्तद्वाजिनं तस्य वाजिनो देवता: तत्रामिक्षाद्रव्यकं विश्वदेवदेवताकर्मकं तथा सति किमुपरितनेन वाजिभ्यो वाजिनमित्यनेन पूर्वास्मिन्नेव कर्मणि वाजिनो गुणः विधीयते उत कर्मान्तरविधिरिति संशयः तत्र वाजोन्नमामिक्षा वा येषां विश्वदेवानामस्ति ते वाजिन इति व्युत्पत्या प्रकृतमेवानूद्य वाजिन गुणो विधीयते स चामिक्षया सह विकल्प्यते समुच्चीयते वेति पूर्वः पक्षः उत्पत्तिशिष्टामिक्षागुणावरुद्धस्य कर्मणो गुणान्तरकांक्षाभावाद्वाजिनस्तत्र प्रवेशासम्भवे सति अन्यथोपपन्नो वाजिन गुणो वाजिशब्दार्थस्य प्रकृतदेवताव्यतिरिक्तदेवताकत्वं कल्पयित्वा कर्मभेदे पर्यवस्यतीति राद्धान्तः तत्र यथा विश्वदेवदेवताके यागे उत्पत्तिशिष्टामिक्षालक्षणगुणावरोधे सति न गुणान्तरस्यावकाशोस्ति यथाहुः । "गुणान्तरावरुद्धत्वात्पूर्वकर्मण्यसम्भवात् । क्रियान्तरमतिं कुर्यादात्मसङ्गतये गुणाः" इति तद्वद्दहरान्तरुपासने महेश्वरावरुद्धे सति न नारायणादिदेवतान्तराणामवकाशः ॥ ३७ ॥

ननु परमपुरुषस्योपास्यत्वाभावे मध्यमानुवाके तत्सङ्कीर्तनं व्यर्थमित्याशङ्क्य परिशेषप्रमाणेनोपासकतया तत्सङ्कीर्तनमित्याह—

**नासावुपासनमुपास्यकथैव दूरे**
**तस्मादुपासकतया परिशेषसिद्धिः ।**

अन्तर्व्यवस्थितगिरा परमात्मनस्ते
शब्दादृतेऽपि विहितन्तदुपासकत्वम् ॥ ३८ ॥

उपासनविधौ विधेयं त्रिविधं उपासनमुपास्यमुपासकश्चेति ततोपासनायाः क्रियारूपत्वात्पुरुषतादात्म्यन्न सम्भवति । अत एवासौ नोपासनमक्रियारूपत्वात् उपास्यकथा दूरे दूर एव वर्तत इति शेषः उपासनाविधितत्फलयोरनुपलम्भात्परमपुरुषस्योपास्यकथा दुरापास्तेति भावः । तस्मादुपासकतया परिशेषसिद्धिः । ननु पारिशेष्यस्यानुमानरूपत्वेन सम्भावनामात्रबोधकत्वम् अतश्श्रुतिमन्तरेणायमर्थो दुर्ज्ञेय इत्याशङ्क्य श्रुत्यभावेऽपि श्रुतिसामर्थ्यरूपं लिङ्गं प्रमाणमित्याह अन्तरिति । "पद्मकोशप्रतीकाशं हृदयञ्चाप्यधोमुखम्। तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्। तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः । तस्य मध्ये वह्निशिखा अणीय्योर्ध्वा व्यवस्थितः । तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" । इति परमात्मनस्ते अन्तर्व्यवस्थितगिरा नारायणहृदयवह्निशिखामध्यावस्थितत्वबोधकवाक्येन शब्दादृतेपि पदान्तरनिरपेक्षलक्षणश्रुतिमन्तरेणापि तत्सामर्थ्यरूपेण लिङ्गेन तदुपासकत्वं तस्य नारायणस्योपासकत्वं विहितमितीममर्थमर्थाद्वाकल्पनैकदेशत्वादित्यत्राचार्यपादास्समर्पयामासुः । "अर्थे यत्र तु सन्दिग्धे वाक्यशेषो न विद्यते । तत्र सामर्थ्यसिद्धेन विद्यते नैव निर्णयः"। इति तत्र वृद्धवार्तिकमकीर्तयत्। "यथैव पाठः प्रतिपत्तिहेतुस्तथैव सामर्थ्यमपि श्रुतीनाम्"। इति ईश्वरस्य नारायण-

हृदयवह्निशिखामध्यावस्थानं नारायणोपासकत्वमन्तरेणानुपपद्यमानमित्यर्थापत्तिसहकारिणी तस्याश्शिखाया इति श्रुतिः तस्योपासकत्वं विधत्त इति तात्पर्यं यद्यपि महेश्वरस्य सर्वान्तर्यामितया तत्रतत्रावस्थानन्तदुपासकत्वमन्तरेणापि घटते। तथापि सर्वव्यापिनो महेश्वरस्य नारायणहृदयावस्थानकथनं नारायणस्योपासकत्वमन्तरेण कथं प्रयोजनवत्स्यात् अतो नारायणस्योपासकत्वप्रतिपादने श्रुतेस्तात्पर्यमस्तीति बोद्धव्यं नारायणस्येश्वरोपासकत्वं महाभारते शान्तिपर्वणि नरं प्रति नारायणेनोक्तम्। "अहमात्मा हि लोकानां सर्वेषां पाण्डुनन्दन। तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम्। यद्यहं नार्चयेयं वै ईशानं भुवनेश्वरम्। आत्मानन्नार्चयेत्कश्चिदिति मे भावितंमनः। मया प्रमाणं हि कृतं लोकस्समनुवर्तते। प्रमाणानि च पूज्यानि ततस्तं पूजयाम्यहम्। इति सञ्चिन्त्य मनसा पुराहं विश्वमीश्वरम्। पुत्रार्थमाराधितवानात्मनात्मानमात्मनः"। इति ॥ ३८ ॥

ननु। "आत्मा नारायणः परः"। इति। वाक्ये परमात्मशब्दस्य नारायणवाचकत्वाच्छिखावाक्येपि परमात्मशब्दस्य नारायणवाचकत्वं युक्तमतः कथं तस्योपासकत्वमित्यत आह—

यस्य स्थितोसि हृदये परमस्त्वमात्मा
युक्तञ्च तस्य परमात्मतया ऽभिधानम्।
स्वेन स्वयं मनसि वह्निशिखान्तराळे
तिष्ठन्नुपास्य इति हास्यपदं न कस्य ॥ ३९ ॥

परमात्मा त्वं यस्य नारायणस्य हृदये स्थितोसि तस्य नारायणस्य हृदये परमात्मनः महाभारते शान्तिपर्वण्यभिहितम्। "मनो वहति कौन्तेय तमसः परमां गतिम्। मनोवहतिलोके-शतमसः परमां गतिम्। रजो वहति राजेद्रं सत्वस्य परमां गतिम्। सत्वं वहति शुद्धात्मा परं नारायणं प्रभुम्। प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना। परमात्मानमासाद्य तद्भूतायतयो-पि च। अमृतत्वाय कल्पन्ते न चावर्तन्ति चेह भो। परमात्मा गतिः पार्थ निर्द्वंद्वस्सुमहात्मनाम्"। सभापर्वण्यपि। "यारायणो महायोगी सर्वज्ञः परमात्मवान्। ब्रह्मभूतस्तदात्मानं ब्रह्माणमसृ-जत्स्वयम्"। इति ईश्वरस्यैव परमात्मत्वमुक्तं वायवीयसंहितायाम्। "सर्वस्मात्परमैरेभिर्गुणैर्नित्यसमन्वयात्। स्वस्मात्परात्मविरहा-त्परमात्मा शिवस्मृतः"। इति। पुराणान्तरे च। "अग्नेरौष्ण्यं यथा तद्वदादित्यस्य यथा प्रभा। परमात्मा शिवादन्यो नास्तीति मुनयो विदुः"। ननु। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदा-हृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः"। इति। गीतायां नारायणस्य परमात्मत्वमवगम्यत इति चेन्न अव्ययादि-गुणविशेषो य ईश्वरः लोकत्रयमाविश्य बिभर्तीति प्रसिद्धेश्वरमु-द्दिश्य उत्तमो यः पुरुषस्स परमात्मेतीश्वरस्यैव परमात्मत्व मुच्यते। अन्यथा प्रकृत्यालिङ्गतपुरुषान्यत्वमुक्तमीश्वरस्यैवेति वायवीयसंहितायाम्। "प्रकृतिः क्षरमित्युक्ता पुरुषो क्षर उच्यते। तावुभौ समनुप्रेक्ष्यस्सपरः परमेश्वरः"। इति। मन्त्र-

शास्त्रेपि "ब्रह्मा तु पूरको ज्ञेयः कुम्भको विष्णुरुच्यते। रेचकस्तु तथा ज्ञेयः क्षराक्षरपरः शिवः"। ईश्वरस्य परमात्मत्वादेव खलु तस्यैवाश्रयणीयत्वमुक्तं गीतायाम्। "ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ सर्वभावेन भारत"। इति। प्रकरणवशादीश्वरशब्दस्य नारायणवाचकत्वमिति चेन्न। "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्"। इति। श्रुत्या मायया सर्वजगत्प्रेरकत्वमीश्वरस्यैव ईश्वरः ऐव शरणं गन्तव्यो नानीश्वर इति एवकारस्वारस्यबलेनेश्वरविषयत्वे सम्भवति यद्यपीश्वरशब्द ईश्वरवाचको भवति। तथापीश्वरवाणी नारायणप्रकरणे आनीता सती नारायणवाचीति चेल्लोके पतिव्रता ऽन्यपुरुषेण बलात्कारेण नीयमानाऽपि स्वप्राणनाथमेव वदन्ती पुरुषान्तरन्नस्पृशति तथैवेश्वरवाण्यपि नारायणेन बलान्नीयमानाऽपि स्वप्राणनाथं परमेश्वरमेव वदति पुरुषान्तरं न स्पृशति ईश्वरशब्दस्य पुरुषान्तरस्पर्शो नास्तीति काळिकायामप्युक्तम्। "अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम्"। इति। ननु नारायणप्रकरणे श्रुतमीश्वरपदं कथं तत्परस्स्यात् कुण्डपायि ब्राह्मणानुवचनेन ब्राह्मणा विविदिषन्ति। यज्ञेन दानेन तपसा ना केनेत्यत्र यज्ञशब्दवदीश्वरशब्दोपि ईश्वर एवेति सर्वमनवद्यम्। आत्मानमहं जानामीत्यत्र एकस्यैवात्मनो यथा कर्मकर्तृभावः तद्वत्परमात्मनो नारायणस्यैकस्यैवोपास्योपासकभावः। तथा मति वाक्यद्वयेपि परमात्मशब्दस्य नारायणवाचकत्वान्मुख्यार्थलाभ

इत्यत आह स्वेनेति मनसि हृदये वह्निशिखान्तराळे स्वयमात्मा स्वेनात्मना उपास्य इति वचनं न हि सुशिक्षितापि नटवधूः स्वस्कन्धमारुह्य नृत्यतीति वचनवत् कस्य हास्यपदं परिहासविषयं न भवति नारायणस्य स्वहृदयवह्निशिखामध्यावस्थानमात्माश्रयदोष-प्रसङ्गान्नयुज्यत इति भावः ॥ ३९ ॥

ननु यद्वेदादाविति वाक्यसहितेन दहरं विपाप्ममिति वा-क्येन परमेश्वर उपास्य इत्युक्तं तत्राधिकार्यपेक्षायां वेदान्तविज्ञा-नेति वाक्येनाधिकारिणो यतात्मानो दर्शिताः फलाकांक्षायाञ्च । परामृतात्परिमुच्यन्ति सर्वे। इत्यनेनोपासनाफलत्वेन मुक्तिर्दर्शिता अनेन यतात्मानो मुक्तिकामा महेश्वरमुपासीरन्नित्यर्थः परिनिष्ठितो भवति किमपरमवशिष्यते यदर्थन्नारायणहृदयादिकं संकीर्त्यते अत आह नारायणस्येति यद्वा उपासकपुरुषवर्णनमप्येपासनायाश्श्र-द्धाहेतुकमित्यत आह—

**नारायणस्य हृदयं सुषिरं महाग्नि-**
**रग्नेश्शिखा च परमातमपदं यदुक्तम् ।**
**सर्वोप्युपासनविधेरयमर्थवाद-**
**श्श्रद्धाविशिष्टपुरुषाचरणाद्विधेये ॥ ४० ॥**

यथा देवासुरास्संयत्ता आसन् स प्रजापतिरिन्द्रज्येष्ठं पुत्रमित्यनुवाके पत्नीं संयाजान्तानामिष्टीनां विधाय तच्छ्रद्धापा-

दनार्थं एवं हि देवा अकुर्वत इति देवा अकुर्वतेति विशिष्टपुरुषाचरणत्वमुक्तं तद्वदिहापीति ॥ ४० ॥

अथ विशेषेण श्रुतस्यापि हृदयादेर्नारायणसम्बन्धित्वमुक्तप्रकरणबलादङ्गीकर्तव्यमित्यत आह—

**नारायणप्रकरणे हृदयं यदुक्तं**
**तस्यैव तद्भवितुमर्हति नापरेषाम्।**
**दृष्टं यतिप्रकरणे यतिभिर्गृहीतं**
**पूर्वानुवाकविहितं यदुपासनन्ते ॥ ४१ ॥**

नारायणप्रकरणे यदुक्तं हृदयं तत्तस्यैव नारायणस्यैव सम्बन्धी भवितुमर्हति अपरेषान्नेति तद्दृष्टान्तमाह दृष्टमिति पूर्वानुवाकेदहरमित्यादिना सामान्येन विहितं यदुपासनं यदस्ति तत्सन्यासयोगादिति यत्यात्मप्रकरणे दृष्टं सद्यतिभिगृहीतं सम्बन्धं दर्शपूर्णमासप्रकरणे दृष्टात्समिधो यजतीत्यादिवाक्यविहितप्रयाजांजैर्यथा दर्शपूर्णमासाङ्गत्वं तद्वन्नारायणप्रकरणोक्तं हृदयन्नारायणसम्बन्धीत्यर्थः। अनेन प्रकरणलक्षणं प्रमाणमुक्तम् ॥४१॥

ननु नारायणस्योपासकत्वे नारायण परं ब्रह्मेत्यादिवाक्येन तस्य परब्रह्मत्वादुपासकधर्माभिधानन्नसङ्गच्छत इत्यत आह—

**ब्रह्मोच्यते परमसौ परमञ्च तत्वं**
**ज्योतिः परञ्च परमेश्वर पद्मनाभः।**

त्वद्भावनैकरसिकस्त्वदनन्यभावा-
न्मन्त्री यथा गरुडभावनया गरुत्मान् ॥ ४२ ॥

पद्मनाभः पद्मं नाभौ नस्य सः। "अच्प्रत्यन्ववपूर्वात्साम-लोम्नः"। इत्यत्राजिति योगविभागः कर्तव्यः पद्मनाभोर्णनाभदीर्घ-रात्रवर्षरात्राद्यर्थमिति योगविभागादच् असौ पद्मनाभः नारायणः त्वद्भावनैकरसिकः त्वद्भावनायां त्वदुपासनायामेकस्यां रसिकः अत्यन्तप्रीतिमान् त्वदनन्यभावात् ध्यातृध्येयविकाररहितसमाधि लक्षणावस्थायां त्वदैक्यारोपात्। ल्यब्लोपे पञ्चमी। त्वदैक्यारो-पमवलम्ब्य गरुडभावनया गरुत्मन्तमात्मानंमन्यमानो मन्त्री गरुत्मानिव। "नारायण परं ब्रह्म तत्वन्नारायणः परः। नारा-यणपरो ज्योतिरात्मा नारायणः परः"। इति। श्रुत्या परं ब्रह्मेति परं तत्वमिति परं ज्योतिरिति चोच्यते नारायण परो ज्योतिः नारायण परं ब्रह्मेत्यत्र छान्दसो विभक्तिलोपः ननु गरुडभावनया गरुत्मानित्यत्र गरुडमान्त्रिकयोः प्रत्यक्षदृष्टत्वेन भेदे सिद्ध गरुड-धर्मोपचारेण गरुत्मानिति मन्त्री व्यवह्रियते अत्र तु कथमिति चेदत्रापि श्रुतिप्रमाणेन नारयणस्योपासकत्वमुपास्यपरमेश्वरधर्मा रोपणपरम्ब्रह्मपरन्तत्वमित्यादिव्यपदेश उपचारात्। तथा च सौर-संहितायाम्। "उमापतिर्नमस्कार्यः सर्वैर्ध्येयो हृदम्बुजे। शि-वोध्येयो हरिब्रह्मप्रमुखैर्गुणमूर्तिभिः। तस्य ध्यानाद्धरिस्साक्षान्ना-रायणसमाह्वयः। देवस्सहस्रशीर्षा च विश्वाक्षो विश्वतोमुखः। विश्वो विश्वस्य निर्माता पालकश्च परात् परः। अक्षरः परमो

नित्यो हरिर्मायापतिः प्रभुः । पुरुषश्च पुराणश्च तं विश्वमुपजीवति । सोयं सर्वमहत्वेन तथा सर्वात्मना ऽपि च । यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य तिष्ठत्ययं खलु । साक्षाद्वेदान्तवाक्यानान्निष्ठा रुद्रः पशोः पतिः । अम्बिकापतिरानन्दस्स्वयमेव न संशयः । सदा नारायणस्यापि ब्रह्मणः परमेष्ठिनः । रुद्रस्यापि शिवो ध्येयः किं पुनस्सर्वदेहिनाम् " । इति । किञ्च । " इतिहासपुराणाभ्यां वेदार्थमुपब्रह्मयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति । वेदार्थनिर्णयविधौ हि पुराणमङ्गम् " इत्यादिना पुराणैरेव वेदार्थनिर्णय इति सकलपुराणेषु । महाभारते हरिवंशे च नारायणस्येश्वरोपासकतयोक्तत्वान्नारायण उपासक इति निर्णयः । शैवेषु दशविधपुराणेषु । " यस्मात्साम्बो महादेवः प्रददौ पुत्रमात्मनः । तस्माज्जाम्बवतीसूनुं साम्बश्चक्रेऽस्यनागतः " । इत्यादि नारायणस्योपासकत्वं कण्ठत उक्तम् । विष्णुपुराणे गुढतया तद्यथा । " हरिरीश्वर " इति हरावीश्वरशब्दप्रयोग ईश्वरोपासकत्वमभिधत्ते यथा मान्त्रिके गरुडशब्दप्रयोगस्तद्वत् पुराणे वेदुषु च अनेकेश्वरान्येश्वरत्वप्रसिध्यभावेनेश्वरस्यैवेश्वरत्वप्रसिध्या ईश्वरत्वप्रसिद्धे व्यवस्थितेस्तच्छब्दप्रयोगस्तदुपासकत्वं ब्रूते । इति गूढं किञ्च । " मनसो नोपकर्तृत्वात्तथा ऽसौ परमेश्वरः । स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तमः । सर्वशक्तिमयो विष्णुस्स्वरूपम् " । इत्यादिकं विष्णुपुराणे उपासकत्वसूचकं द्रष्टव्यम् । भागवतेऽपि । " ध्यायमानंमहादेवं चिन्तयन्तं सदाशिवम् " ।

इत्यादि। महाभारते आरण्यपर्वणि। "ततो गच्छेत्सुवर्णाभं त्रिषु लोकेषु विश्रुतम्। यत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा। वरांश्च सुबहून् लेभे दैवतेषु सुदुर्लभान्। उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत। अपि चास्मत्प्रियतरो लोके कृष्ण भविष्यसि। त्वन्मुखञ्च जगत्सर्वं भविष्यति न संशयः"। इति। पुलस्त्य-तीर्थयात्रायाम्। द्रोणपर्वणि। कैलासयात्रायाम्। "वासुदेवस्तु तं दृष्ट्वा ननाम शिरसा क्षितिम्। पार्थेन सह धर्मात्मा गृणन् ब्रह्म सनातनम्। लोकादिं विश्वकर्माणमजमीशानमव्ययम्"। इत्यादि। स्वास्त्रप्रतिहत्या दुःखितमश्वत्थामानं प्रति व्यासवचनम्। व्यासः। "महान्तमेतमर्थं मां यत्वं पृच्छसि संशयात्। तत्तेहं संप्रवक्ष्यामि समाधाय मनश्शृणु। यो ऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः। आदि देवो जगन्नाथो लोककर्ता स्वयं प्रभुः। आद्य-स्सर्वस्य लोकस्य ह्यनादि निधनोच्युतः। व्याकुर्वते यस्य तत्वं श्रुतयो मुनयश्च ये। अतो ऽजेयस्सर्वभूतैर्मनसाऽपि जगत्पतिः तस्मादिमं जेतुकामो ध्वान्तेन तमसा वृतः। माशुचः पुरुषव्याघ्र विद्धि तद्वदिहार्जुनम्। तस्य शक्तिरसौ पार्थस्तस्माच्छोकमिमं त्यज। विश्वेश्वरो ऽथ लोकानामन्तरात्मा ह्यधोक्षजः। सहस्र-संमितादंशादेकांशो ऽयमजायत। देवानां हितकामार्थं लोकाना-ञ्चैव सत्तमः। व्यजायत स्थापनार्थं पुत्रो धर्मस्य विश्वसृक्। स तपः परमास्थाय मैनाकं गिरिमास्थितः। ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः। षष्टिर्वर्षसहस्राणि तावन्त्येव शतानि च।

व्यशोषयत्तदा देहं वायुभक्षो जितेन्द्रियः। अथापरन्तपस्तप्त्वा द्विसतोन्यत् पुनर्महत्। द्यावापृथिव्योर्विवरन्तेजसा समपूरयत्। तदा तत्र समुत्पन्नो महाभूतो यदा भवत्। ततो विश्वेश्वरं योगी विश्वस्य जगतः प्रभुम्। ददर्श भृशदुर्दर्शं सर्वभूतैरपीश्वरम्। अणीयसामणीयांसं बृहद्भ्यश्च बृहत्तरम्। रुद्रमीशानमृषभञ्चेकितानमजं परम्। गच्छतस्तिष्ठतो वाऽपि सर्वभूतहृदि स्थितम्। दुर्वारणं दुर्विषहं दुर्निरीक्ष्यं दुरासदम्। अतिमन्युंमहात्मानं सर्वभूतप्रचेतसम्। तं देवदेवं परमाणुमीश्वरं तं दिव्यस्त्रं विदुषामाददानम्। हिरण्यवर्माणमनन्तवीर्यं पिनाकिनं वज्रिणं दीप्तशूलम्। परश्वथं गदिनं व्यायताक्षं सुभ्रुं जटामण्डलचन्द्रमौळिम्। व्याघ्राजिनं परिघं घण्डपाणिं शुभ्राङ्गदं नागयज्ञोपवीतिम्। विश्वेशानं प्रावृतं भूतसङ्घैरेकीभूतं तपसां सन्निधानम्। वचोधिकं सुष्टुतं साधुभिश्च जलं दिवं खं क्षितिचन्द्रसूर्यौ। हुताशवायुप्रतिमं सुरेशं नालं द्रष्टुं भिन्नभावैर्जनैश्च। ये चानृता नास्तिकाः पापशीला ब्रह्मद्विषो ऽप्राप्यमृतस्य योनिम्। ये पश्यन्ति ब्राह्मणास्साधुवृत्ताः क्षीणे पापे मनसा वीतशोकाः। तन्निष्ठात्मा तपसा देवमीड्यं तं भक्त्या वै विश्वरूपं ददर्श। दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैस्संहृष्टात्मा मुमुदे देवदेवः। दिव्यमालापरिक्षिप्तं तेजसां परमं निधिम्। रुद्रं नारायणो दृष्ट्वा ववन्दे देवमीश्वरम्। वरदं सहपार्वत्या प्रियया दयितं प्रियम्। अजमीशानमव्यक्तं कारणात्मानमव्ययम्। स जानुभ्यां महीं गत्वा कृत्वा शिरसि चाञ्जलिम्। पद्माक्षस्तं विरूपाक्षमभितु-

ष्टाव बुद्धिमान्। दिव्यामृतौ मानसौ द्वौ अवाक् शाखाः पिप्पलास्सप्त गोप्ताः। वाचश्चार्था देवता लोकपाला लोकानन्ये ये पुरा धारयित्वा। गता हि तेभ्यः परमं तत्परश्च तत्सम्भूतास्ते च तेभ्यः परञ्च। भूतं भव्यं भावियच्च प्रधृष्यं त्वत्सम्भूतास्सप्त चेमे हि लोकाः। भक्तञ्च मां भजमानं भजस्व प्रीत्या मां वै लोकपितामहेश। त्वमात्मनामात्मभावस्वरूपं विद्वानेव गच्छति ब्रह्मशुक्रम्। अस्तौषन्त्वान्तव धामानमिच्छन्विचिन्वन्वै वृषभं देवमीड्यम्। सुदुर्लभान्देहिवरानभीष्टानभीष्टदो यदकार्षीरिह त्वम्। तस्वै वरानचिन्त्यात्मा नीलकण्ठः पिनाकधृक्। विष्णवे देवमुख्याय प्रायच्छद्वरमुत्तमम्। मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु। अप्रमेयबलात्मा च नारायण भविष्यसि। एवमादीन्वरान्लब्ध्वा प्रसादादेव शूलिनः। स एष देवश्चरति मायया मोहयन् जगत्"। इत्यादि। "जन्मकर्मतपोयोगास्तयोश्च तव पुष्कलाः। आभ्यां लिङ्गेऽर्चितो देवस्त्वया ऽर्चायां युगे युगे। देवदेवस्त्वचिन्त्यात्मा ह्यमेयो विष्णुसम्भवः। सर्वरूपं भवं ज्ञात्वा लिङ्गे ऽर्चयति तं प्रभुम्"। इत्यादि। कर्णपर्वणि। "अथ पुरुषवरौ कृताह्निकौ भवमभिपूज्य यथाविधि प्रभुम्। अरिवधकृतनिश्चयौ ध्रुवं तव बलमर्जुनकेशवौ श्रितौ"। सौप्तिके पर्वणि। "तमूर्ध्वबाहुन्निश्चेष्टं दृष्ट्वा हरिमुपस्थितः। अब्रवीद्भगवान्साक्षान्महादेवो सहन्निव। सत्यशौचार्जवत्यागैस्तपसा नियमेन च। क्षान्त्या भक्त्या च धृत्या च मनसा कर्मणा गिरा।

यथावदहमाराध्यः कृष्णेनाक्लिष्टकर्मणा । तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते" । इत्यादि । शान्तिपर्वणि । "यं विष्णुरिन्द्रो रुद्रश्च ब्रह्मा लोकपितामहः । स्तुवन्ति विविधैस्तोत्रैर्देवदेवंमहेश्वरम् । तमर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते" । इति । "त्वया द्वादश वर्षाणि तपः कृत्वा जगद्गुरुम् । आराध्य पशुभर्त्तारं रुक्मण्यां जनितास्सुताः । तथा ममापि तनयं प्रयच्छाच्युत मा चिरम् । इत्येवं चोदितो देव्या तामवोचस्तुमध्यमाम् । अनुजानीहि मां राज्ञि करिष्ये वचनन्तव" । इत्युक्त्वा गरुडमारुह्य हिमवत्पर्वतं गत्वा उपमन्युं दृष्टवान् । तेनोक्तश्च । "जप्यञ्च ते प्रदास्यामि येन द्रक्ष्यसि शङ्करम् । कृष्णः । अब्रुवं तमहं ब्रह्मंस्त्वत्प्रसादान्महामुने । द्रक्ष्ये ऽहं दैत्यसङ्घानां मर्दनं त्रिदशेश्वरम् । दिनाष्टमेन विप्रेण दीक्षितो ऽहं यथाविधि । दण्डी मुण्डी कुशी चीरी घृताक्तो मेखली तथा । निरीक्ष्य भगवान्देवींमामुमाञ्च जगद्धितः । शतक्रतुञ्चाभिवीक्ष्य स्वयंमामाहशङ्करः । विदुः कृष्ण परां भक्तिमस्मासु तव शत्रुहन् । क्रियतामात्मनश्श्रेयः प्रीतिर्हि परमा त्वयि । वृणीष्वाथ वरान् कृष्ण दाता ऽस्मि तव सत्तम । ब्रूहि यादवशार्दूल यानिहेच्छसि दुर्लभान्" । इति । "सन्तर्पयन्तो विश्वेशं हुत्वा चाग्निं विभावसुम् । देवीं स्कन्दं गणांश्चैव गोवृषं नन्दिकेश्वरम् । विनायकञ्च संपूज्य स्तुतिभिश्चा ऽस्तुवद्धरिः । मन्त्रैर्माहेश्वरैरेव शान्तिमङ्गळयुक्तिभिः । उदकञ्च गृहीत्वा ऽथ बिल्वञ्च हरिरव्ययः । देवमावाहयामास

रुद्रं सर्वेश्वरेश्वरम् । ततः प्राप्तो महादेवस्सोमस्सप्रवरो विभुः । तं पारिजातकुसुमैरर्चयामास केशवः । तुष्टाव वाग्भिर्देवेशं सर्वकर्तारमीश्वरम् । इति संस्तूयमानस्तु भगवान्गोवृषध्वजः । प्रसार्य दक्षिणं हस्तं वासुदेवमथाब्रवीत् । मनीषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातस्य भर्तासि माभूत्ते मनसो व्यथा । यथा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो । तथा मम वरं कृष्ण संस्मृत्य स्वैरमाप्नुहि । अवध्यस्त्वमजेयश्च मत्तश्शूरतरस्तथा । भवितासीत्यवोचद्यतत्तथा न तदन्यथा" । इत्यादि । "इत्युक्तो देवदेवेशः प्रियया प्रियमाणया । तया महिष्या रुक्मिण्या रुक्मिशत्रुर्यदूद्वहः । प्रोवाच वचनं काले रुक्मिणीं यादवेश्वरः । तस्माद्दास्यामि ते पुत्रं विद्यावन्तं मधार्मिकम् । एष गच्छामि पुत्रार्थं कैलासं पर्वतोत्तमम् । तत्रोपास्य महादेवं शङ्करं नीललोहितम् । ततो लब्धोऽस्मि पुत्रं तं भवाद्भूतहिते रतात् । तपसा ब्रह्मचर्येण भवं शङ्करमव्ययम् । तोषयित्वा विरूपाक्षमादिदेवमजं प्रभुम् । गमिष्याम्यहमद्यैव द्रष्टुं शङ्करमव्ययम् । स च मे दास्यते पुत्रं तोषितस्तपसा मया । तत्र देवं विरूपाक्षं नमस्कृत्य सहोमया । तमारुह्य महाशैलं देवकीनन्दनो हरिः । मानसस्योत्तरं तीरं जगाम यदुनन्दनः । तपः कर्तुं किल हरिर्विष्णुस्सर्वेश्वरं शिवम् । जटी चीरी जगन्नाथो मानुषं वपुरास्थितः । तपसे धृतचित्तस्तु शुचौ भूमावुपाविशत् । अवरुह्य ततो यानाद्गरुडाद्वेदसम्मितात् । द्वादशाब्दं तपः कर्तुं मनो दध्रे ततो हरिः । फाल्गुनेन

तु मासेन समारोहत् जगत्पतिः। शाकभक्षः कृतजपो वेदाध्ययनतत्परः। किमुद्दिश्य जगन्नाथस्तपश्चरति मानदः। तत्र विघ्नो यथाकामं दुर्ज्ञेयेश्वरचिन्तना। तपस्यति तदा विष्णौ पर्वते भूतसेविते। गरुडस्तार्क्ष्यतां यात इन्धनानि समाच्छिनत्। होमार्थं वासुदेवस्य चरतस्तप उत्तमम्। चक्रनाथोऽथ पुष्पाणि सञ्चिनोति तदा हरेः। दिक्षु सर्वासु सर्वत्र ररक्ष जलदस्तदा। खड्गआहृत्य यत्नेन कुशांश्च बहुशस्तदा। गदा कौमोदकी चैव परिचर्यांश्चकार ह। धनुः प्रवरमत्युग्रं शार्ङ्गं दानवभीषणम्। स्थितं हि पुरतस्तस्य यथेष्टं भृत्यवत्स्वयम्। जुहोति भगवान्विष्णुरेधोर्बहुभिस्तथा। आज्यादिभिस्तदा दिव्यैरग्निं संपूज्य माधवः। सप्तार्चिषरस्समाप्तिश्च समस्ताश्चाकरोत् कृती। एकस्मिन्नेकदा मासे भुञ्जानो नियतात्मवात्। द्वितीये त्वथ पर्याये भुञ्जन्नेकेन केन चित्। एकस्मिन्वत्सरे भुञ्जंस्तथैवैकेन केन चित्। सयाप्य वत्सरं सम्यक्सर्वमेव जगत्पतिः। द्वादशाब्दे तथा पूर्णे माघे मासे जगत्पतिः। जुह्वन्नग्निन्तथा ध्यायन्पठन्मन्त्रं जनार्दनः। आरण्यकं पठन्विष्णुस्साक्षाल्लोकेश्वरो हरिः। आस्ते ध्यानपरस्तत्र पठन्प्रणवमुत्तमम्। ततस्समाप्ते सकले जगत्पतिर्वृते समूले सकलेश्वरश्शिवः। द्रष्टुं हरिं लोकहितैषिणं शिवो ययौ भवान्या सह भूतसङ्घैः। अवरुह्य गवाच्छर्वो भगवान्भूतभावनः। तत उत्थाय भगवान्दृष्ट्वा देवमवस्थितम्। वृषध्वजं विरूपाक्षं शङ्करं नीललोहितम्। ततो दृष्ट्वा नमन्विष्णुस्तुष्टाव हरमीश्वरम्। नमस्ते देवदेवेश महा-

देवाय ते नमः । का नु वाक्स्तुतिरूपा ते कोनु स्तोतुं प्रशक्नुयात् । कस्य वा स्फुरते जिह्वा स्तुतौ स्तुतिमतां वर । क्षमस्व भगवन्देव भक्तो ऽहन्त्राहि मां विभो । ततो वृषध्वजो देवश्शूली साक्षादुमापतिः । करं करेण संस्पृश्य विष्णोश्चक्रधरस्य हि । प्रोवाच भगवानुद्रः केशवं गरुडध्वजम् । पुत्रार्थं यदि ते देव। तपश्चर्या जनार्दन। पुत्रो दत्तो मया देव पूर्वमेव जगत्पते" । इति । आरण्यपर्वणि । "भक्तो भवन्तौ नित्यंमे मदात्मानौ मदंशकौ । मदाज्ञया लोकहितं कर्तुमभ्युद्यताविमौ"। इत्यादि। हरिवंशे नारायणस्येश्वरोपासकत्व प्रतिपादितम् । तस्मात्परमेश्वरपरमपुरुषयोरुपास्योपासकभावस्य वज्रलेपायमानत्वात् । ब्रह्माऽपि तदपह्नोतुमशक्य इत्यलमतिविस्तरेण। अत्रेह केचिदूचिरे। न तु नारायणात्मेति नारायणान्तर्यामी परमेश्वर इति यदुक्तं तदयुक्तम्। तथाहि। नारायण परं ब्रह्मेति नारायणस्य परब्राह्मभिधानार्थं पद्मकोशप्रतीकाशमित्यादिना पुरुषान्तरस्य हृदयं पुण्डरीकस्थानमुक्त्वा तस्य मध्ये वह्निशिखेत्यादिना जीवस्वरूपमुक्त्वा तस्याशिशखायामध्ये परमात्मा व्यवस्थितः इत्यनेन परमात्मत्वेन जीवान्तर्यामित्वेनोपास्य-व मवगम्यते। स ब्रह्मा स शिव इत्यादिना तद्विभूतित्वं ब्रह्मशिवादीना मुच्यते नारायणपदाग्रहणाच्च । अतो नारायण एव विश्वपतिर्ब्रह्मभूतो जीवान्तर्यामित्वेनोपास्यः। अतस्तदात्मत्वेन तदधिकत्वं तदुपास्यत्वं परमेश्वरस्य वक्तुमसारमिति यदुक्तं तदेवासारम्। तथाहि। पद्मकोशप्रतीकाशमिति

नारायणस्यैवहृदय मुच्यते कथं तस्य कर्मकर्तृव्यपदेशत्वं सङ्गच्छ-ते परमात्मा व्यवस्थित इति परमेश्वर एव परमात्मा तदन्तर्वर्ति-तया ध्येयत्वेनोच्यते ततोद्ध्योतृत्वेन नारायणस्य ध्येयत्वेन परमेश्वरस्य कर्तृत्वं व्यपदिश्यत्येव । अतो नारायणादन्य एवो पास्यः परमात्मा स ब्रह्मा स शिव इत्यादिना ब्रह्मविष्णुरुद्रेन्द्रा-दिप्रपञ्चविभूतिविशिष्टत्वं परमेश्वरस्योपदिश्यते सेन्द्रः स इन्द्रः "सोऽचि लोप" इत्यादिना सुलोपः अक्षरः परम इति नारायणस्या-भिधानम् । "विश्वं नारायणं देवमक्षरं परमं प्रभुम्" । इति प्रत्यभिज्ञाप्यमानत्वात् । तथा च ब्रह्माण्डपुराणे । "स ब्रह्मा स शिवस्सेन्द्रस्सोच्युतः परमस्वराट्" । इति । अत्तरपदस्थाने ऽच्युतशब्दप्रयोगादुपासकस्य सतोप्यधिकारिभिस्सहोपादानम-धिकारिप्रदर्शनाय स्वराट् स्वस्मिन्राजत इति स्वराट् । "ईश्वरः पशुपतेः पशवो विरूपास्सदृशा उत । तेषां यं वव्रिरे देवास्तं स्वराडनुमन्यताम्" । इति श्रुत्यन्तरदर्शनात् सोयमीश्वरस्तत्तदधि कारिभिर्ब्रह्मादिभिस्तदात्मत्वेन संस्तूयत इति ब्रह्मादयस्तद्विभूतयः। ऋतं सत्यमित्यादिना निरालम्बनोपासनासम्भवात् सालम्बनवि-शेषः कृष्णपिङ्गळत्वादिरूपविशेष प्रदर्शितम् । तथा च कैवल्योप-निषद्यपि । "उमासहायं परमेश्वरं प्रभुम्" इत्यादिना प्रदर्शित-मिति सर्वमनवद्यम् ॥ ४२ ॥

न केवलं नारायणोपनिषदि परमेश्वरोपासकत्वं नाराय-णस्योक्तं किंतु नारायणपरासु गीतास्वपीत्याह—

गीतासु योगजविभूतिविभावनाय
नारायणश्शिवपदं प्रतिवाचमूचे।
योगन्निशामय महेश्वरगोचरं मे
दिव्यं ददामि तव चक्षुरिति प्रसन्नः ॥ ४३ ॥

दिव्यं चक्षुस्तव ददामि महेश्वरगोचरं महेश्वरविषयं मे मम योगं उपासनाफलं वैश्वरूप्यमित्यर्थः निशामय पश्येति प्रसन्नो नारायणः गीतासु योगजविभूतिविभावनाय ईश्वरोपासनजनितवैश्वरूप्यज्ञापनाय शिवपदमीश्वरपदं प्रतिवाचमूचे एवं हि तत्र वचनम्। "न हि मां शक्यते द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्"। इति। हि यस्मात्कारणादनेन मानुषेण चक्षुषैव एव शब्दस्त्वर्थे स्वचक्षुषा तु विश्वरूपं मान्द्रष्टुं न शक्यसे न क्षमसे अतस्ते दिव्यं चक्षुर्ददामि ऐश्वरं शेष इत्यण् ईश्वरगोचरं योगमुपासनं तत्फलं वैश्वरूप्यं पश्येति मे योगमित्यनेन विष्णोर्योगं प्रति कर्तृत्वं ऐश्वरमिति शेषलक्षिततद्धितान्तेन पदेन तस्य योगस्येश्वरविषयत्वमुच्यते अतो विष्णोरुपासकत्वमीश्वरस्योपास्यत्वमिति भावः। "एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः। दर्शयामास पार्थाय परमं योगमैश्वरम्"। इति। अत्रापीश्वरविषयं योगमुपासनाफलं वैश्वरूप्यं पार्थाय दर्शयामासेत्येवं बहुस्थलेषु गीतासु। "उपद्रष्टाऽनुमन्ता च कर्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो

देहेऽस्मिन्पुरुषः परः"। इति। स्वस्योपासकत्वमीश्वरस्योपास्यत्वञ्चातिस्पष्टतयोक्तम् ॥ ४३ ॥

ननु "स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट्"। इति वाक्येनोपास्यो देवो ब्रह्मा शिवो हरिरिन्द्र इति शिवादन्यः प्रतीयत इत्याह—

त्वामन्तरेण न कथंचिदुपासनीय-
मन्यं ब्रवीति सशिवस्तुतिरन्तकारे।
यद्ब्रह्मशब्दसमभिव्यवहारयोगा-
त्संहारकारिणि हरे शिवशब्दमाहुः ॥ ४४ ॥

हे अन्तकारे सशिवस्तुतिः सशिव इत्येवं रूपा स्तुतिः संस्तववाक्यमर्थवादवाक्यमित्यर्थः त्वामन्तरेणान्यमुपासनीयं कथञ्चिन्नब्रवीति कुत इत्यत आह यद्यस्मात्कारणात् ब्रह्मशब्दसमभिव्यवहारयोगात्। "वेदस्तत्वं तपो ब्रह्मा"। इत्यमरसिंहवचनात् यद्यपि नपुंसकलिङ्गो ब्रह्मशब्दः पर तत्ववाची तथाप्यधिकारीन्द्रादिप्रायपाठादधिकारी प्रजापतिवाची छान्दसो लिङ्गव्यत्ययः ब्रह्माद्यधिकारिवाची ब्रह्मादिशब्दसमानस्थानाम्नानसम्बन्धात्संहारकारिणि हरे कालाग्निरुद्रे शिवशब्दमाहुः अयं भावः। "क्रमश्च देशसामान्यात्"। इति जैमुनिसूत्रोक्तस्थानाख्यप्रायपाठलक्षणप्रमाणादधिकारिवाची ब्रह्मेन्द्रादिशब्दस्थानपठितश्शिवशब्दः कालाग्निरुद्रे अधिकारिणि गौण्या वर्तत इति तदुक्तम्। "यत्प्रायश्श्रूयते यच्च तत्तादृगवंम्यते। भाक्तप्राये श्रुतमिदमतो भाक्तं

प्रचक्षते "। इति। कालरुद्रस्य संहारकारित्वञ्च । "अन्या च महती शक्तिर्निहन्ति सकलं जगत्। तामासी मे समाख्याता कालरुद्राख्यरूपिणी"। इति कूर्मपुराणवचनादवगन्तव्यम्। आदित्यपुराणेऽपि। "यस्याज्ञया जगत्सृष्टा विरिञ्चः पालको हरिः। संहर्ता कालरुद्राख्यः नमस्तस्मै पिनाकिने"। इति। सशिव इति शिवशब्दस्य कालरुद्रवाचित्वं कैवल्योपनिषद्यतिस्पष्टतयोक्तम्। हृत्पुण्डरीकमित्यादिना हृदयपुण्डरीकं प्रस्तुत्य। "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्। स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्वराट्। स एव विष्णुस्सप्राणस्सकालोऽग्निस्सचन्द्रमाः"। इत्यादिना ॥ ४४ ॥

ननु "विष्णोरन्यं तु पश्यन्ति ये मां ब्राह्मणमेव च। कुतर्कमतयो मूढाः पच्यन्ते नरकेषु ते। ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः। ब्रह्माणं च तथा तेषां भ्रूणहत्यासमन्त्वघम्"। तथा। "भवानहञ्च विश्वात्मन्नेकमेव हि कारणम्। जगतोऽस्य जगत्यर्थे भेदे नावां व्यवस्थितौ। त्वया यदभवद्दत्तं तद्दत्तमखिलं मया। मत्तो विभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर। योऽहं सर्वजगच्छेदं सदेवासुरमानुषम्। अविद्यामोहितात्मानः पुरुषाभिन्नदर्शिनः"। इति। पुराणवाक्यैर्हरिहरयोरभेदप्रतिपादनान्नारायणोपनिषदि परमेश्वरस्योपास्यत्वं नारायणस्योपासकत्वञ्च वक्तुं न शक्यते किंतु महेश्वरनारायणशब्दाभ्यामेकमेव वस्तूपास्यतयाभिधीयत इत्युक्तम्। तथा च सति। "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्"

इति शिवाच्युतशब्दाभ्यामुपास्यवस्तुनोर्मध्ये परामर्शश्चोपपद्यत इत्याशङ्क्य यज्ञत्वयज्ञपतित्वादिविरुद्धधर्माक्रान्तत्वादुभयोस्तेजस्तिमिरयोरिवाभेदो न सिध्यतीत्यत आह—

**विश्वाधिकस्त्वमसि विश्वमयं मुरारि-**
**र्यज्ञेश्वरस्त्वमसियज्ञममुं गृणन्ति।**
**आद्या जगत्प्रकृतिरेषभवान्निमित्त-**
**मातः कथन्नु भगवन्युवयोरभेदः ॥ ४५ ॥**

त्वं विश्वाधिकोऽसि। तत्र श्रुतिः। "विश्वाधिको रुद्रो महर्षिः"। इति। ईश्वरस्य विश्वाधिकत्वम्। "नमो हिरण्यबाहवे सेनान्ये"। इत्यादिना प्रतिपाद्य तस्य घोषणमिव कुर्वन्नाह "नमो दुन्दुभ्याय"। इति। "सैषा वाग्वनस्पतिषु वदति। या दुन्दुभौ या तूणवे या वीणायाम्"। इत्यादि। "यस्सर्वासाञ्च देवतानां हेतुः। यो वै विष्णोरधिको मही"। इत्यादि। अयं मुरारिर्विश्वं तत्र श्रुतिः। "विश्वन्नारायणं देवम्"। इति। त्वं यज्ञेश्वरोऽसि तत्र श्रुतिः। "गाथपतिमेथपतिं रुद्रं जलाषभेषजं"। इति। "आवोराजानमध्वरस्य रुद्रम्"। इति च। अमुं नारायणं यज्ञं गृणन्ति। तत्र श्रुतिः। "यज्ञो वै विष्णुः"। "विष्णुर्यज्ञः"। इति च। एष नारायणः आद्या जगत्प्रकृतिः जगत्संस्थापनार्था ईश्वरस्य सात्विकी शक्तिः। तत्र श्रुतिः। "वासुदेवः पराक्रुतिः"। परा प्रकृतिरित्यर्थः। तथा च कूर्मपुराणे। "आस्थाय ब्रह्मणो रूपं मन्माया संप्रवर्तिता। राजसी

मामिकाशक्तिः करोति विविधं जगत्। आद्या च शक्तिस्सत्वाढ्या संस्थापयति मे जगत्। भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः। तृतीया महती शक्तिर्निहन्ति निखिलं जगत्। तामसी मे समाख्याता कालरुद्राख्यरूपिणी"। इति। तथा च ब्रह्माण्डपुराणे। "प्रकृतिस्त्वं पुमान्रुद्रस्त्वयि यद्वीर्यमाहितम्। नमो विष्णुकळत्राय विष्णुक्षेत्राय भावने"। इति। तथा च विष्णुपुराणे। "यस्यसर्वमभेदेन जगदेतच्चराचरं। सएव मूलप्रकृतिर्व्यक्तरूपी जनार्दनः"। इति। "मनसो नोपकर्तृत्वात्तथासौ परमेश्वरः। स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तमः। सर्वशक्तिमयो विष्णुस्वरूपं ब्रह्मणोपरम्"। इति। भवान्निमित्तम्। तत्र श्रुतिः। "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः"। इति हे भगवन् आतः अतः कारणादुभयोः कथन्नु केन प्रकारेणाभेदः ननु हरिहरयोस्सात्विके भेदे। "विष्णोरन्यं तु पश्यन्ती" त्याद्युदाहृतानि पैराणवचनान्यनवकाशानि स्युरिति चेन्न। हरिहरयोस्सात्विकाभेदे। "उपास्यत्वे समानेऽपि हरश्श्रेष्ठो हरेरजात्। न समो नापि हीनश्च नास्ति सन्देहकारणम्। हीनं वाथ समं वापि हरिणा ब्रह्मणा हरम्। ये पश्यन्ति सदा ते तु पच्यन्ते नरकार्णवे। हरिब्रह्मादिदेवेभ्यश्श्रेष्ठं पश्यन्ति ये हरम्। ते महाघोरसंसारान्मुच्यन्ते नात्र संशयः"। इति। हरिहरयोर्न्यूनाधिकभेदप्रतिपादनेन भेदपराणि सूतगीतावचनान्यन्योन्यमनवकाशानि स्युरिति समानमेव तर्हि विनिगमनायां को हेतु-

रिति चेत्। "ब्रह्मविष्णुरुद्रेन्द्रास्संप्रसूयन्ते न कारणम्"। इत्यादीनि श्रुत्यनुग्रहीतानि सूतगीतावचनानि। तथा चादित्यपुराणे। "विश्वेश्वरमुमाकान्तं विश्वान्तर्यामिणं विभुम्। न ब्रह्माद्यैस्समं ब्रूयाच्छक्तिभिर्नैव पार्वतीम्। ब्रूयाद्यदि समं शम्भुं ब्रह्मविष्ण्वादिभिस्सुरैः। यः कश्चित्तमसा विष्टः कदाचि न्नैव संस्पृशेत्"। इति। महाभारतेऽपि। "यस्य ब्रह्मा च विष्णुश्च त्वञ्चशक्र सहामरैः। पूजयध्वे सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि कः"। इति स्मृत्यनवकाशाधिकरणन्यायेन प्रबलानि। तथाहि। उत्तरमीमांसागत द्वितीयाध्यायप्रथमपादे "चिन्तितं स्मृत्यनवकाशदोषप्रसङ्ग" इति। अस्यार्थ। ऋग्वेदादिभिरग्निहोत्रादिधर्मो ब्रह्मणो जगत्कारणत्वञ्च प्रतीयते सांख्यस्मृतिस्तु प्रधानस्य जगत्कारणत्वं प्रतिपादयति तत्र तया स्मृत्या वेदस्य सङ्कोचो ऽस्ति न वेति सन्देहः स्मृतेः प्रधानस्य जगत्कारणत्वमन्तरेण निरवकाशत्वात् प्राबल्यं वेदस्य तु धर्मेऽपि चरितार्थत्वात् दौर्बल्यं तस्मात् स्मृत्यनुसारेण वेदस्सङ्कोचो नीयते इति पूर्वः पक्षः प्रत्यक्षश्रुतिभिर्बह्वीभिरनुग्रहीता मन्वादिस्मृतयो ब्रह्मकारणत्वमाचक्षते सांख्यस्तुतिस्तु मूलहीना दुर्बला बाध्येति सिद्धान्तः एवमत्रापि हरिमूलहीनानि हरिहरयोरभेदवचनानि श्रुत्यनुग्रहीतवेदवचनैर्बाध्यानीति अथ वा हरिहरयोरभेदवचनानि विष्ण्वादिदेवता अपि तत्तत्फलविशेषार्थिभिरीश्वरमूर्तित्वेनोपास्यानीत्येवंविधार्थप्रतिपादनपराणि। तथा च कूर्मपुराणवचनम्। "ममैषा पर-

मा मूर्तिर्नारायणसमाह्वया । सर्वभूतात्मभूता सा शान्ता चाक्षर-संज्ञिता । तस्मादेव महायोगी मद्भक्तैः पुरुषोत्तमः । अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय हि"। इति। ननु। "नते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप"। इति। श्रुतो विष्णोर्माहात्म्यं न कोऽपि जानातीति श्रवणाद्विष्णोराधिक्यमिति चेन्न । जनिमत्पुरुषापेक्षया महत्वं नजनिरहितशङ्करापेक्षया । "जायमानो न जातः"। इत्युक्तत्वात् । "लोकत्रये ऽप्यस्य प्रभावः"। इति । स्मृतौ विष्णोर्माहात्म्यमवगम्यत इति चेन्न । "न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। न तस्य कश्चित्पतिरास्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः"। इति महादेवाधिक्यप्रतिपादनपरया श्रुत्या विष्ण्वाधिक्यप्रतिपादनपराया स्मृतेर्बाधोपपत्तेः । किंच महादेवो ऽल्प इति माता मे वन्ध्येति वद्व्याख्यातः। ननु पुरुषोत्तम इति विष्णोर्महत्वमवगम्यत इति चेन्न पुरुषोत्तमत्वं महत्वे लिङ्गं । महादेवः । इति महादेवस्य महत्वे श्रुतिः तथा च श्रुतिः "लिङ्गाद्बलीय" सीति न्यायेन महादेवस्यैव महत्वं ननु महांश्चासावीश्वरश्चेति व्युत्पत्या विष्ण्वावपि योजयितुं शक्यमिति चेन्न महादेवे महेश्वरशब्दस्य रूढित्वाद्रूढिर्योगमपहरतीति न्यायेन महादेवस्येव महेश्वरत्वं महेश्वरशब्दस्यानन्यगामित्वश्रवणात् तदाहुस्सर्वज्ञकाळिदासाः ।

"हरिर्यथैकः पुरुषोत्तमस्मृतः महेश्वरस्त्र्यम्बक एव नापरः" । इति । किञ्च शिवपुराणेषु महाभारतेषु च ब्रह्मविष्णुरुद्राणां पिता महेश्वर इति श्रवणान्महादेवस्य महत्वम् ननु शिवपुराणानां तामसत्वादप्रामाण्यमिति चेन्न तामसत्वाभावाच्छिवपुराणां तामसत्वं किं तामसविषयत्वेनोत तामसकर्तृत्वेन नाद्यः । "महान्प्रभुर्वै पुरुषस्सत्वस्यैष प्रवर्तकः । सुनिर्मलामिमा शान्तिमीशानो ज्योतिरव्ययः" । इति श्रुत्या सत्वप्रवर्तकत्वश्रवणाच्छिवस्य तत्पुराणानाञ्च न तामसत्वम् ।"ब्रह्मविष्णुरुद्रेन्द्रास्संप्रसूयन्ते....न कारणं ....शम्भुः"। इति । "त्र्यम्बकं यजामहे"। इति त्रयाणां ब्रह्मविष्णुरुद्राणामम्बकः पिता त्र्यम्बकः इति त्रयाणां यो ब्रह्मविष्ण्वीशरूपिणामम्बको ऽसौ पिता यस्मात्तस्मात्र्यम्बक उच्यत इत्यादि श्रुत्यवष्टंभादीश्वरस्य ब्रह्मादिपितृत्वप्रतिपादकानां तत्पुराणानां सुतरां प्रामाण्यम् । न द्वितीयः विष्णुपुराणानामपि तामसत्वं दुर्वारं प्रसज्येत तामसकर्तृत्वाविशेषात् किञ्च महोपनिषदि । "वेदान्तविज्ञानसुनिश्चितार्थास्सन्यासयोगाद्यतयश्शुद्धसत्वाः" । इत्यादिश्रुत्या वेदान्तविज्ञानपारङ्गताश्शुद्धसात्विका यतयः तेषामेवेश्वरोपासनायामधिकारःये तमसाः बहिस्सात्विकाभिमानिनः ईश्वरस्तामस इति वदन्ति तेषामीश्वरोपासनायामधिकारो नास्ति मोक्षोऽपि नास्ति सात्विकानामेवेश्वरस्य मोक्षदातृत्वश्रवणान्नतामसत्वम् । वैष्णवेषु पुराणेषु शिवापेक्षया विष्णोराधिक्यमवगम्यत इति चेन्न शिवांशापेक्षया विष्णोराधिक्यं श्रूयते । न तु महेश्वरापेक्षया

शिवपुराणेषु शिवस्य साक्षाद्विष्णुं प्रत्येवाधिक्यं तथा च पराशरपुराणे श्रूयते । "ततोधिकतरस्साक्षाच्छिवस्साम्बस्सनातनः । तदन्यद्विश्वमीशानस्सतु विश्वाधिकश्शिवः । यानि वेदान्तवाक्यानि तानि सर्वाणि सत्तम । विश्वाधिकपराण्येव नैव विश्वपराणि वै । तथा स्मृतिपुराणानि भारतादीनि चास्तिक । शास्त्रान्तराणि तर्काश्च श्रुत्यनुग्राहकास्तथा । विना साक्षाच्छिवं साम्बं प्रमाणान्यखिलान्यपि । विश्वाधिकतया नान्यं प्रवदन्ति कदाचन । माहेश्वरपुराणानि समस्तानि महामुने । असाधारणया मूर्त्या नाम्ना साधारणेन च । वदन्ति परमं तत्वं शिवं साम्बं त्रिलोचनम् । नृत्यन्तं स्वपरानन्दं प्रमोदाच्चन्द्रशेखरम् । त्रिमूर्तीनां हरश्चापि तदंशं तस्य वैभवम् । तदंशस्याभिमानं च प्रवदन्ति महामुने । वैष्णवानि पुराणानि समस्तानि महामुने । त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् । प्रवदन्ति पुराणे द्वे ब्राह्मया मूर्त्या ऽनया दिशा । आग्नेयञ्च तथा सौरं पुराणं पण्डितोत्तम । अष्टादशपुराणानां निष्ठा काष्ठा महेश्वरः । गुणाभिमानिनो नैव ब्रह्मविष्णुमहेश्वराः । वैष्णवानि पुराणानि त्रिमूर्तीनां हरेरपि । तदंशस्य तदंशस्य वैभवञ्च वदन्ति हि । यो ऽपकर्षो हरेर्दृष्टश्शाम्भवेष्वखिलेष्वपि । पुराणेषु हरेस्साक्षान्मूलभूतस्य सत्तम । वैष्णवेषु पुराणेषु यो ऽपकर्षस्तु दृश्यते । रुद्रांशस्य हरस्यास्य विभूतेरेव केवलम् । उत्कर्षो यः पुराणेषु दृश्यते वैष्णवेषु च । असौ तत्वात्मना विष्णोर्नस्वरूपेण सत्तम । एवं

पुराणयोस्साक्षात् ब्रह्मणा दर्शिता च दिक्। पावकस्य पुराणे च तथा सौरे च सत्तम। आधिक्यं देवदेवस्य शिवस्य परमात्मनः। अविज्ञाय नरा विष्णुं वरिष्ठं मन्वते भ्रमात्। रुद्राधिक्यमविज्ञाय ब्रह्मनारायणौ पुरा। अहं ब्रह्मा त्वहञ्चेति विभ्रमादकरोद्रणम्। क्रोधेन महता युक्तो ब्रह्मा सर्वजगत्पतिः। शशाप विष्णुं गर्भस्थो भवत्विति विमोहितः। त्वद्भक्ता ब्राह्मणास्साक्षात्त्रिपुण्ड्रे भस्मकुण्ठने। भवेयुर्विमुखा नित्यं वेदसिद्धे विमुक्तिदे"। इति। इदमत्र तत्वम्। "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः न कारणं कारणानां ध्याता कारणं तुध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुः"। इति। "स ब्रह्मा स शिवः"। इत्यादिश्रुतिभिस्त्रिमूर्तीनां परमेश्वरविभूतित्वतज्जन्यत्वश्रवणात्परमकारणे शिवे अधिकसमचिन्ता नास्ति किं तु तत्पुत्रेषु ब्रह्मविष्णुरुद्रेषु विवादः। तत्रापि को वाधिक इति चेद्रुद्र एवाधिक इति ब्रूमः ब्रह्मविष्णवोरेकैकगुणाधिष्ठातृत्वेन रुद्रस्य त्रिगुणाधिष्ठातृत्वेनाधिक्यं तथा च पाद्मपुराणे श्रयते। "यएकश्शाश्वतो देवो ब्रह्मवन्द्यस्सदाशिवः। त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः। धातासि स्रष्टा तस्यैव वीक्ष्यात्मार्थं गुणत्रयम्। वेदत्रयञ्च यज्ञोऽयं गुणत्रयमिदं हि यत्। पृथक्कृत्यात्मनस्तद्धि तत्त सारं विभज्य च। दक्षिणेनासृजत्पुत्रं ब्रह्माणं वामतो हरिम्। ब्रह्मदेशान्महेशानं त्रीन् पुत्रानसृजद्विभुः। जातमात्रास्तु ते पुत्रा ब्रह्मविष्णुमहेश्वराः। इदमूचुर्हि विस्पष्टं को भवान् के वयन्त्विति। तानाह

च शिवः पुत्रान्यूयं पुत्रा अहं पिता। इदं गुणत्रयं पुत्रा भजध्वं कार्यहेतुतः। पुत्राः। कं वा गुणं को भजतां कियन्तं कालमीश्वर। कथं गुणनिवृत्तिश्च भवेदेतद्वदस्वनः। ईश्वरः। यावद्ज्ञानं हि भवतां यावदायुरथापि वा। धारणन्तावदेतत्स्यादेकैकस्य गुणस्य वः। सत्वं ब्रह्मा रजो विष्णुर्भजेन्माहेश्वरस्तमः। इत्युक्तमात्राद्देवेन ब्रह्मा सत्वमथाग्रहीत्। न च धारयितुं शक्तस्तमश्च किमु शक्तिमान्। तं गुणं तु तिरस्कृत्य रजोगुणमथाग्रहीत्। न च चालयितुं शक्तो निपपात रुरोद च। विष्णुश्च वामहस्ते न रजोगुणमधारयत्। रुद्रोङ्गुल्या सत्वगुणं स तं विष्णुमधारयत्। ब्रह्माणं पादपीठे च दधार च ननर्त च। नृत्यन्तमत्यन्तविलासरूपं गोक्षीरवर्णं तरुणं त्रिणेत्रम्। सर्वन्दधानं कृतकौतुकं शिवस्समीक्ष्य पुत्रं वरदो बभाषे। प्रीतो ऽस्मि तव पुत्रोहं वरं वृणु यथेप्सितम्। अथाह पितरं पुत्रो वरमेतद्वदस्व मे। मामुद्दिश्य कृता पूजा तव पूजा भवेच्छिव। तिष्ठन्मयि सदा त्वञ्च त्वमेवाहं भवाव्यय। इश्वरः। एवमेतन्महाभाग भविष्यति नसंशयः। रक्तगौराविमौ पुत्रौ ब्रह्मविष्णू ममैव तु। बाहुमूलस्थरोमैव ममाकारौ तवानघ। अथ ब्रह्माणमाहेदं भजत्वेकं गुणं भवान्। ब्रह्मा। त्वन्निर्दिष्टगुणं नाहं धर्तुं शक्तो महेश्वर। धारयिष्ये रजो देव सत्वं भजतु वै हरिः। अवशिष्टगुणञ्चायमीश्वरो धारयिष्यति। गुणानादाय ते देवा न शेकुर्नित्यधारणम्। कर्तुं भरणशक्त्यर्थं शिवमित्यब्रुवन् सुताः। गुणत्रयं सर्वकालं न च धारयितुं क्षमाः। दीयतां भगवञ्छक्तिर्यदि

हे त्वन्तरं वद। अथ तद्वचनं श्रुत्वा शिवो वाक्यमभाषत। विद्याशक्तिस्समस्तानां शक्तिरित्यभिधीयते। गुणत्रयाश्रिता विद्या ह्यविद्या च तदाश्रिता। गुणत्रयञ्च दग्ध्वैव तत्सारं धर्तुमर्हथ। यच्च किट्टं भवेत्तत्र भवद्भिर्ध्रियतां हि तत्। सत्वं रजस्तमश्चापि दधार च पुरा किल। ततश्च त्रिविधा पूजा शङ्करस्य विधीयते"। इति। ब्रह्माण्डपुराणे ऽपि रुद्राधिक्यं श्रूयते। "योजनायुतविस्तारं ह्रदतोयसमं विषम्। तत्करे चुळुकान्तस्थं स शिव स्तादृशो भवान्। वचनाद्ब्रह्मणो घोरं जगतो हितकाम्यया। तद्धृत्वोत्पलपत्राभं कण्ठे काञ्चनसन्निभम्। द्रष्टव्यमिति सर्वैस्तज्जठरन्नानयच्छिवः। वराहदंष्ट्रकूर्मास्थिनृसिंहत्वक्करोटिवत्। कण्ठेन गरळं धत्ते शिवो नान्येन हेतुना। इति ते सर्वमाख्यातं शिवोत्कर्षं महीपते। मूर्तित्रयं विशेषेण मुख्यं मत्वा शिवं भज। इतो ऽप्यन्याश्शिवोत्कर्ष कथास्सन्ति सहस्रशः। ताश्च वक्तुमशेषेण न शक्या वर्षकोटिभिः। ब्रह्मपुत्रः क्षुपो नाम राजा क्षुपसमुद्भवः। दधीचश्शिवभक्तस्तु तयोस्संवाद उद्बभौ। क्षुपार्थं विष्णुरायातश्शिवभक्तो ऽजयच्च तम्। अतश्शिवोधिकः प्रोक्तः पुराणेषु श्रुतौ तथा। उपमन्योर्महादेवः क्षीरार्णवमुपानयत्। कृष्णः पुत्रार्थमीशानं समाराधयति स्वयम्। साम्बं पुत्रं शिवाल्लेभे तस्मादप्यधिकश्शिवः। देवदारुवने विष्णुरभूत् स्त्रीपतिरीश्वरः। अनेनापि शिवाधिक्यमनुमेयं महर्षिभिः। क्रुद्धेन भृगुणा शप्तो विष्णुर्मत्स्यादियोनिषु। भेजे वपूंषि शापान्तं तेषु

चावासकृच्छिवात्। देवदारुवनर्षिभिर्मुक्ताश्शापास्सदाशिवम्। न प्रहर्तुं समर्थास्स्युरनेनाप्यधिकश्शिवः। क्रूराः पापहता वेदबाह्याश्चैव नराश्शिवम्। निन्दन्त्यन्यान्प्रशंसन्ति निरयेषु पतन्त्यमी। शिव एव परं तत्वं शिव एव परं पदम्। शिव एव परं ब्रह्म जानाति शिवतामियात्। इत्यादि। तस्माद्रुद्रस्यैवाधिक्यमिति निर्णयः। ननु परमेश्वरेण तत्तदधिकारे नियोजिता ब्रह्मविष्णुरुद्रादय अधिकारित्वाविशेषेण सर्वे ऽपि समाना इति चेन्न। अधिकारित्वसाम्ये ऽपि न्यूनाधिकभावा असकृच्छ्रूयन्ते। वायवीयसंहितायाम्। "ब्रह्मा विष्णुदिने चैको विष्णुरुद्रदिने तथा। ईश्वरस्य दिने रुद्रस्सदाख्यस्य तथेश्वरः। साक्षाच्छिवस्य तत्सङ्ख्यास्तथा सो ऽपि सदाशिवः। तस्मिन् साक्षाच्छिवेनैव कालात्मा संप्रवर्तते"। इत्यादि। कालसंख्या रुद्रेश्वरादिष्वौपचारिकी। कालसंहर्तुर्हरस्य कालसंख्या नास्तीति ब्रह्माण्डे श्रूयते। "सर्वस्य जगतस्स्रष्टुरायुर्वर्षशतं स्मृतम्। तत्परार्द्धद्वयं प्राहुः पञ्चाशद्वर्षभेदतः। ब्रह्मणस्त्वायुषः पूर्वः परार्द्धस्तु गतः क्रमात्। द्वौ परार्द्धौ दिनं विष्णो वर्षं षष्ठ्या शतत्रयम्। तच्छतं वैष्णवं ह्यायुरहं शम्भोरितिस्थितः। आयुर्दिनं विधेर्विष्णोर्विष्ण्वायुश्शाम्भवं दिनम्। शम्भ्वायुषि इयत्ता न कालकालो यतश्शिवः"। इत्यादि। माण्डूक्योपनिषत्सु। "यत्र सुप्तो नकञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्त्यवस्थानएकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्त्रि

तीयः पादः। सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति"। इति। अविद्यामात्रोपाधिकत्वात्कार्यकारणयोरभेदविवक्षया तामसगुणमादाय जगद्रुद्रस्संहरतीति पुराणेषु व्यवहार इत्यलमतिविस्तरेण ॥ ४५ ॥

ननु नारायणस्य विश्वात्मत्वे। पतिं विश्वस्यात्मेश्वरम् ॥ इति श्रुतौ नारायणस्य विश्वपतित्वं कथमाम्नायत इत्यत आह—

**विश्वात्मनस्तुतिषु विश्वपतित्ववाद-**
**स्सङ्गच्छते स्तुतितयैव रथाङ्गपाणेः।**
**विश्वस्यपत्युरथ विश्वतयाभिधानं**
**नालं गुणाय गुणगृह्यनिकर्षहेतुः ॥ ४६ ॥**

विश्वमात्मा स्वरूपं यस्य तस्य विश्वात्मनो रथाङ्गपाणेस्तुतिषु प्रशंसास्वर्थवादवाक्येषु विश्वपतित्ववादः विश्वपतित्ववचनं स्तुतितयैव सङ्गच्छते युक्तो भवति। समोगमृच्छिभ्यामिति गमेरात्मनेपदम्। छायातपयोरिवान्योन्यविरुद्धयोर्विश्वपतित्वयोरेकत्र समावेशासम्भवात्। यजमानः प्रस्तर इत्यादिवद्विश्वात्मनोर्नारायणस्य विश्वपतित्ववादस्तुतिरिति। ननु विश्वपतेर्नारायणस्य विश्वत्ववादस्तुतिः किं न स्यादित्यत आह विश्वस्य पत्युरिति अथ कात्स्न्येन। "मङ्गळानन्तरारम्भप्रश्नकात्स्न्येंष्वथो अथ" इत्यमरः विश्वतया ऽभिधानं गुणगृह्यनिकर्षहेतुः पदास्वैरिबाह्यापेक्ष्येषु चेति गृह्णातेः पक्ष्यार्थे क्यपि गुणापकर्षकारणं सद्गुणाय

स्तुतये नालं न समर्थं उत्कर्षहेतुभिस्तवनमपकर्षहेतुभिर्निन्देति वचनं सर्वजनीनमेतत् ॥ ४६ ॥

नन्वीश्वरस्यापि सर्वो वै रुद्रः इत्यादौ विश्वत्वं श्रूयत इत्याह—

विश्वं महेश्वर भवानधितिष्ठतीति
विश्वात्मतामुपचरन्ति यदागमास्ते ।
तत्पण्डिता विदितवेदरहस्यशीलाः
जानन्ति मन्दमतयस्तु तदेव सत्यम् ॥ ४७ ॥

हे महेश्वर विश्वं भवानधितिष्ठतीति विश्वाधिष्ठातृत्वमीश्वरस्य पुराणेषु श्रूयते । "शृणु कृष्ण महेशस्य शिवस्य परमात्मनः । मूर्त्यात्मभिस्ततं विश्वं जगदेतच्चराचरम् । स शिवस्सर्वमेवेदं स्वकीयाभिश्च मूर्तिभिः । अधितिष्ठत्यमेयात्मा तस्मात्सर्वतनुस्स्मृतः । ब्रह्मा विष्णुश्च रुद्रश्च महेशानस्सदाशिवः । मूर्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् । अथान्याश्चापि तनवः पञ्चब्रह्मसमाह्वयाः । तनुभिस्ताभिरव्याप्तमिह किञ्चिन्न विद्यते । ईशानः पुरुषो ऽघोरो वामस्सद्यस्तथैव च । ब्रह्माण्येतानि देवस्य मूर्तयः पञ्च विश्रुताः । ईशानाख्या तु या तस्य मूर्तिराद्या गरीयसी । भोक्तारं प्रकृतेस्साक्षात् क्षेत्रज्ञमधितिष्ठति । स्थाणोस्तत्पुरुषाख्या या मूर्तिर्मूर्तिमतः प्रभोः । गुणत्रयात्मकं भोग्यमव्यक्तमधितिष्ठति । धर्माद्यष्टाङ्गसंयुक्तं बुद्धितत्वं पिनाकिनः । अधि

तिष्ठत्यघोराख्या मूर्तिरत्यन्तमूर्जिता। वामदेवाह्वया मूर्तिर्महादेवस्य वेधसः। अहं कृतेरधिष्ठात्रीमाहुरागमवेदिनः। सद्योजाताह्वया मूर्तिश्शम्भोरमिततेजसः। मनसस्समधिष्ठात्रीं मतिमन्तः प्रचक्षते। श्रोत्रस्य वाचश्शब्दस्य विभोर्व्योम्नस्तथैव च। ईश्वरस्यैनामीशानां समाख्यातां विदुर्बुधाः। त्वक्पाणि स्पर्शपायूनामीश्वरींमूर्तिमैश्वरीम्। पुरुषाख्यां विदुःपूर्वा पुराणार्थविशारदाः। चक्षुषश्चरणस्यापि रूपस्याग्नेस्तथैव च। अघोराख्यामधिष्ठात्रीं मूर्तिमाहुर्मनीषिणः। रसनायाश्च पायोश्च रसस्यापस्तथैव च। ईश्वरीं वामदेवाख्यां मूर्तिं मुनिवरा विदुः। घ्राणस्य चैवोपस्थस्य गन्धस्य च भुवस्तथा। सद्योजाताह्वयांमूर्तिमश्वरीं संप्रचक्षते। मूर्तयः पञ्च देवस्य वन्दनीयाः प्रयत्नतः। श्रेयोर्थिभिर्नरैर्नित्यं श्रेयसामेकहेतवः। तस्य देवादिदेवस्य मूर्त्यष्टकमिदं जगत्। अस्मिन्व्यवस्थितं विश्वं सूत्रे मणिगणा इव। शर्वो भवस्तथा रुद्र उग्रो भीमः पशोः पतिः। ईशानश्च महादेवो मूर्तयश्चास्य विश्रुताः। भूम्यम्भोग्निमरुद्व्योमक्षेत्रज्ञार्कनिशाकराः। अधिष्ठिता महेशस्य शर्वाद्यैरष्टमूर्तिभिः। चराचरात्मकं विश्वं धत्ते विश्वम्भरात्मिका। शार्वी शर्वाह्वया मूर्तिरिति शास्त्रस्य निर्णयः। सञ्जीवनं समस्तस्य जगतस्सलिलात्मिका। भव इत्युच्यते मूर्तिर्भवस्य परमात्मनः। बहिरन्तर्जगत्सर्वं व्याप्य तेजोमयी शुभा। रौद्री रुद्राह्वया मूर्तिरास्थिता ऽघोररूपिणी। स्पन्दयन् पवनो विश्वं बिभर्ति स्पन्दते स्वयम्। उग्र इत्युच्यते सद्भिर्मूर्तीरुद्रस्य

वेधसः। सर्वावकाशदा सर्वव्यापिका गगनात्मिका। मूर्तिर्भीमस्य भीमाख्या भूतवृन्दस्य भेदिका। सर्वात्मनामधिष्ठात्री सर्वक्षेत्रनिवासिनाम्। मूर्तिः पाशुपती ज्ञेया पशुपाशनिकृन्तनी। दीपयन्ती जगत्सर्वं दिवाकरसमाह्वया। ईशानाख्या महेशस्य मूर्तिर्दिवि विसर्पति। आप्याययति यो विश्वममृतांशुर्निशाकरः। महादेवस्य सा मूर्तिर्महादेवसमाह्वया। आत्मा तस्याष्टमी मूर्तिश्शिवस्य परमात्मनः। व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम्। वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा। शिवस्य पूजया तद्वत्पुष्यत्यस्य वपुर्जगत्। सर्वाभयप्रदानञ्च सर्वानुग्रहणन्तथा। सर्वोपकारकरणं शिवस्याराधनं विदुः। यथेह पुत्रपौत्रादेः प्रीत्या प्रीतो भवेत्पिता। तथा सर्वस्य संप्रीत्या प्रीतो भवति शङ्करः। देहिनो यस्य कस्यापि क्रियते यदि निग्रहः। अष्टमूर्तेश्शिवस्यैतत्कृतमेव न संशयः। अष्टमूर्त्यात्मना विश्वमधिष्ठाय स्थितश्शिवः। भजस्व सर्वभावेन रुद्रं परमकारणम्"। इत्यादि। विश्वमिति। "अधिशीङ्स्थासां कर्म"। इति कर्मसंज्ञायां द्वितीया। इति हेतोः आगमाः। "सर्वो वै रुद्रः"। इत्यादि श्रुतयः ते विश्वात्मतामुपचरन्ति। तथा च वायवीयसंहितायाम्। "अत एव जगत्यस्मिन् काष्ठपाषाणमृत्स्वपि। शिवावेशवशादेव शिवत्वमुपचर्यते। अशिवात्मकमप्येतत् शिवेनाधिष्ठितं यथा। अरुद्रात्मकमप्येतद्रुद्रे जगदधिष्ठितम्। अण्डान्ता हि महाभूमिश्शतरुद्राद्यधिष्ठिता"। इति। उपचारेण

लक्षणावृत्त्या ब्रुवन्तीति यत् तत् विदितवेदरहस्यशीलाः जानन्ति विदितानि वेदार्थानि वेदरहस्यानि उपनिषद्वाक्यानि शीलयन्ति उपक्रमादिषड्विधतात्पर्यलिङ्गैर्विचारयन्तीति विदितवेदरहस्यशीलाः शीलिकामिभिक्षाचरिभोरण इति शीलेन पण्डिता विद्वांसो जानन्ति । मन्दमतयः मूढमतयस्तु वेदरहस्यार्थपरिशीलनाभावादीश्वरस्य सर्वाधिष्ठातृत्वमजानन्तः पुरुषास्तु तदेव । "सर्वो वै रुद्रः" । इत्यादिवाक्ये प्रतीयमानं विश्वत्वमेव रुद्रस्य सत्यं जानन्ति "तत्सृष्ट्वा तदेवानु प्राविशत् स एष इह प्रविष्ट अनखाग्रेभ्यः स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यते" इत्यादि श्रुतिषु । "शिवेनाधिष्ठितं विश्वं जगदेतच्चराचरम् । सर्वरूपस्मृतश्शर्वस्तथा ज्ञात्वा न मुह्यति" । इत्यादि पुराणवाक्येषुचेश्वरस्य विश्वस्मिन्ननुप्रवेशस्मरणात् । "सर्वो वै रुद्रः" "सर्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं सर्वम्" । इत्यादिवाक्येषु सर्वशब्दोऽपि तदनुप्रविष्टमीश्वरं लक्षणावृत्त्या बोधयतीति भावः ॥ ४७ ॥

अमुमेवार्थं कात्यायनो गृह्ये महेश्वरस्य सर्वाधिष्ठातृत्वमभिधाय तत्प्रमाणत्वेन । "सर्वो वै रुद्रः" । इति श्रुतिसमानार्थाया रुद्रोह्येवैतदिति सर्वमिति श्रुतेरुदाहृतत्वादीश्वरस्य सर्वाधिष्ठातृत्वमेव न सर्वात्मकत्वमित्याह——

**तुभ्यं नमो विदधदीश्वर तन्तमर्थ**

**मातिष्ठते सकलकर्मसु विश्वदर्शी ।**

सर्वानुवादमिदमुक्तसमर्थनाय

कात्यायनो मुनिरुदाहरति स्म गृह्ये ॥ ४८ ॥

सर्वदर्शी सर्वार्थदर्शनशीलः कात्यायनः मुनिः गृह्ये तन्तमर्थं पृथिव्यादिसर्वपदार्थमातिष्ठते अधिष्ठाय स्थितवते तुभ्यं सर्वकर्मसु लौकिकवैदिकसर्वकर्मसु नमो विदधत् पन्थानं गच्छन्नभिमन्त्रयते । "नमो रुद्राय पथिषदे स्वस्ति मा संपारय" । इति वनस्पतिमारुह्य अभिमन्त्रयते । "नमो रुद्राय वनस्पतिषदे स्वस्ति मा संपारय" । इति गिरिमभिमन्त्रयते । "नमो रुद्राय गिरिषदे स्वस्ति मा संपारय" । इति श्मशानमभिमन्त्रयते । "नमो रुद्राय पितृषदे स्वस्ति मा संपारय" । इति गोष्ठमभिमन्त्रयते । "नमो रुद्राय शकृत्पिण्डगते स्वस्ति मा संपारय" । इति । एवमन्यत्रापि "नमो रुद्रायेत्येवब्रूयात्" इति वाक्यैर्नमस्कारं विदधत् उक्तार्थसमर्थनाय ईश्वरस्य सर्वाधिष्ठातृत्वसमर्थनाय इदं सर्वानुवादम् । "सर्वो वै रुद्रः" । इत्येतत्सर्वानुवादं तत्र यदि सर्वशब्दस्य सर्वत्वमर्थस्स्यात् स्यादेवं मन्त्रपाठः । "नमः पथ" इति "पथिषद" इति हि दृश्यते । एवमन्यत्रापि पथिषद इति मन्त्रपाठानन्तरम् । रुद्रो ह्येवै तत्सर्वमितीममुदाहरति स्म । मा मां स्वस्ति मङ्गळस्य संपारय सम्यक्पारं नय । इति तस्यार्थः । रुद्र एवैतत्सर्वमिति सर्वाधिष्ठाता हीत्यर्थः । "यो रुद्रो अग्नौ" । इति मन्त्रे स्पष्ट एवायमर्थः ॥ ४८ ॥

उक्तं नारायणोपनिषदर्थमुपसंहरति—

**स्थानं यदान्तरमुपास्तिरुपासको वा**
**या सा परा परतया विविधा विभूतिः।**
**यद्वा पुनर्विषमनेत्रमुपासितव्यं**
**नारायणोपनिषदाह तदत्र सर्वम् ॥ ४९ ॥**

यदान्तरं हृदयाख्यस्थानं उपासनास्थानं याचोपास्तिः यश्चोपासकः परा परतया आधिक्यन्यूनाभावेन विविधा बहुविधा या सा विभूतिः विषमनेत्राख्यमुपासितव्यं यच्च वस्तु तत्सर्वमत्र दहरमित्यादिवाक्येषु नारायणोपनिषदाह दहरं विपाप्ममिति स्थानं तस्मिन्यदन्तस्तदुपासितव्यमित्यभिहितमुपासनं सहस्रशीर्षमित्युपासतः सब्रह्मेतीश्वरतादात्म्येन संस्तूयमानां ब्रह्मादिरूपां विभूतिं यद्वेदावित्युपास्तितञ्चा हेत्यर्थः। यद्वा पुनर्विषमनेत्रमुपासितव्यम्। इत्यत्र एषो ऽभिप्रायः अस्यां महोपनिषदि शान्तमनस्कैर्विरक्तैर्ज्ञाननिष्ठैस्सर्वैर्मुमुक्षुभिस्सकलवेदान्तसकलपुराणसकलस्मृतिपरमार्थरूपं परं ब्रह्मोपासितव्यमित्युक्त्वा किं तदित्याकांक्षायाम्।"ऋतं सत्यम्।"इत्यादिना विरूपाक्षत्वाद्युपलक्षणोपलक्षितचैतन्यं ब्रह्मोपासितव्यमिति निर्णयेनाभिधानात् कैवल्याद्युपनिषत्सुच विरूपाक्षत्वाद्युपलक्षणोपलक्षित चैतन्यं ब्रह्मोपासितव्यमिति दुन्दुभिराहन्यते। अतः परमेश्वरयाथात्म्यमेव बहुधा शास्त्रेषु विकल्प्यते। तथाच वायवीयसंहितायाम्। "विग्रहं देव-

देवस्य जगदेतच्चराचरम्। तदेव न विजानन्ति पशवः पाशगौरवात्। तमेकमेव बहुधा वदन्ति यदुनन्दन। अजानन्तः परं भावमविकल्पं महर्षयः। अपरं ब्रह्मरूपं च परं ब्रह्मात्मकं तथा। केचिदाहुर्महादेवमनादि निधनं प्रभुम्। भूतेन्द्रियान्तःकरणं प्रधानविषयात्मकम्। अपरं ब्रह्म निर्दिष्टं परं ब्रह्म चिदात्मकम्। बृहत्वाद्ब्रह्मणत्वाच्च ब्रह्मभूते परापरे। उभे ते ब्रह्मणो रूपे ब्रह्मणोऽधिपतेः प्रभोः। विद्याविद्यास्वरूपेण कैश्चिदीशो निगद्यते। विद्येति चेतनां प्राहुस्तथा विद्यामचेतनाम्। विद्याविद्यात्मकञ्चैव विश्वं विश्वगुरोः प्रभोः। रूपमेव न सन्देहो विश्वं तस्य वशे यतः। भ्रान्तिर्विद्या परञ्चेति शार्वं रूपं परे विदुः। अथवा बुद्धिरर्थेषु बहुधा भ्रान्तिरुच्यते। यथात्माकारसंवित्तिर्विद्येति परिगीयते। विकल्परहितं तत्वं परमित्यभिधीयते। तत्र यच्छाङ्करं रूपं तद्द्य ज्ञाधिष्ठितं यतः। सदसद्रूपमित्याहुस्सदसस्पतिरित्यपि। सत्ये साधौ च सच्छब्दस्सद्भिरेव प्रयुज्यते। विपरीते त्वसच्छब्दः कथ्यते वेदवादिभिः। सच्चासच्च जगद्विश्वं शरीरं परमेष्ठिनः। यदिदं सदिति प्रोक्तं यच्चासदिति कथ्यते। तयोः पतित्वादीशानस्सदसत्पतिरुच्यते। क्षराक्षरात्मकं प्राहुः क्षराक्षरपदं परे। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उभे ते परमेशस्य तदिच्छामप्रवर्तनात्। रूपमेव न सन्देहः परतत्वात्परश्च सः। समष्टिव्यष्टिरूपञ्च समष्टिव्यष्टिकारणम्। वदन्ति मुनयः केचिच्छिवं परमकारणम्। समष्टिं विदुरव्यक्तं व्यक्तं व्यष्टिं तथैव च। ते उभे परमेशस्य

रूपं तस्य वशे यतः। तयोः कारणभावेन शिवं परमकारणम्। कारणार्थविदः प्राहुस्समष्टिव्यष्टिकारणम्। जातिव्यक्तिस्वरूपीति कथ्यते कैश्चिदीश्वरः। यत्पिण्डेष्वनुवर्तेत सा जातिरिति कथ्यते। व्यक्तिर्व्यावृत्तरूपं तत्पिण्डं जातेस्समाश्रयम्। जातयो व्यक्तयश्चैव तदाज्ञापरिपालकाः। यतस्ततो महा देवो जातिव्यक्तिस्वरूपवान्। प्रधानपुरुषव्यक्तकालात्मा कथ्यते शिवः। प्रधानं प्रकृतिं प्राहुः क्षेत्रज्ञं पुरुषं तथा। त्रयोविंशतितत्वानि व्यक्तमाहुर्मनीषिणः। कालः कार्यः प्रपञ्चस्यपरिणामैककारणम्। एषामीशो ऽधिपो धाता प्रवर्तकनिवर्तकः। आविर्भावतिरोभावहेतुरेव स्वराडजः। तस्मात्प्रधानपुरुषः व्यक्तकालस्वरूपवान्। हेतुर्नेताधिपस्तेषां दाता भोक्ता महेश्वरः। विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते। हिरण्यगर्भो लोकानां हेतुर्विश्वात्मको विराट्। अन्तर्यामी परश्चेति कथ्यते कविभिश्शिवः। प्राज्ञास्तेजसि विश्वात्मेत्यपरे संप्रचक्षते। माता मानञ्च मेयञ्च मितिञ्चाहुरथापरे। कर्ता क्रिया च कार्यं च करणं कारणं परे। जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे संप्रचक्षते। तुरीयमपरे प्राहुस्तुर्यातीत मथापरे। तमाहुर्द्विगुणं केचिद्गुणवन्तं परे विदुः। केचित्संसारिणं प्राहुरस्वतन्त्रं परे विदुः। घोरमित्यपरे प्राहुस्सौम्यमित्यपरे विदुः। रागवन्तं परे प्राहुर्वीतरागमथापरे। केचिच्चिन्तामयं प्राहुश्चिन्तयारहितं परे। ज्ञानात्मकं परे प्राहुर्विज्ञानमिति चापरे। एके तमेकमेवाहुरपरञ्च परं विदुः। एवं विकल्प्यमानन्तद्याथात्म्यं परमेष्ठिनः। नाध्यवस्य-

न्ति मुनयो नानाप्रत्यकारणात्। ये पुनस्सर्वभावेन प्रपन्नाः परमेश्वरम्। ते विजानन्त्ययत्नेन शिवं परमकारणम्"। इत्यादि। "यावत्पाश्यो नैष पश्यत्यनीशं कविं पुराणं भुवनस्येशितारम्। तावद्दुःखे वर्तते बद्धपाशस्संसारे ऽस्मिन्चक्रनेमिक्रमेण। यदा पाश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परममुपैति साम्यम्"। इति तस्माद्वेदेषु पुराणेषु शास्त्रेषु स्मृतिषु वा यत्र यत्र परब्रह्मशब्दश्श्रूयते तत्र तत्र विरूपाक्षः परमेश्वर एव ब्रह्मशब्दार्थ इति जयदुन्दुभिस्सर्वेषु लोकेषु ताड्यतामिति। नाराणोपनिषदि सकलोपनिषदुदीरितोपास्यत्वलक्षणस्याव्याप्त्यतिव्याप्तिशब्ददोषो नास्तीति ॥ ४९ ॥

ननु यद्येषोपनिषदीश्वरप्रतिपादनपरा अस्यास्तर्हि कथं नारायणोपनिषद्व्यपदेशस्संगच्छत इत्यत आह—

**यज्ञात्मना स्वयमसावृषिणोपदिष्टा**
**नारायणेन भवतः प्रतिपादयित्री।**
**सूक्तं यथा पुरुषदैवतमन्तकारे**
**नारायणार्षमिति तद्व्यपदिष्टमाहुः ॥ ५० ॥**

तथा च। लैङ्गे। "वेदशब्देभ्य एवेशो विश्वात्मानमचिन्तयत्। तदाभवदृषिस्तत्र ऋषेस्सारतरं शुभम्। तेनैव ऋषिणा विष्णुर्ज्ञातवान् परमेश्वरम्"। इति। यथा सहस्रशीर्षेति पु-

रुषदैवतं सूक्तं नारायणाख्येनर्षिणा दृष्टं नारायणार्षं शेष इत्यण् इति हेतोस्तद्व्यपदिष्टं तेन नारायणेन व्यपदिष्टं यथोक्तं सहस्रशीर्षा षोडश शौनक ऋषिः नारायणः पुरुषो देवता अनुष्टुबिति तथा हे अन्तकारे भवतस्तव प्रतिपादयित्री प्रतिपादिका असावुपनिषद्यज्ञात्मना नारायणेनर्षिणा दृष्टा अत एतामुपनिषदं नारायणोपनिषदित्याहुः। सूक्तं यथा पुरुषदैवतमित्यत्र पुरुषसूक्तप्रतिपाद्यः को वेति चेदस्यैवोत्तरं लैङ्गे श्रूयते। "महेश्वरः परोऽव्यक्तादण्डमव्यक्तसम्भवम्। अण्डाज्जज्ञे स एवेशः पुरुषोर्कसमप्रभः। तस्मिन्कार्यस्य करणं संसिद्धिं स्वेच्छयैव तु। स वै शरीरी प्रथमस्सवै पुरुष उच्यते। तस्य वामाङ्गजो विष्णुस्सर्वलोकनमस्कृतः। लक्ष्म्या देव्या अभूद्देव इच्छया परमेष्ठिनः। दक्षिणाङ्गभवो ब्रह्मा सरस्वत्याभवद्गुरुः। तस्मिन्नण्डे त्विमे लोका अन्तर्विश्वमिदं जगत्। चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना। लोकालोकद्वयं किञ्चि दण्डेप्यस्मिन्समर्पितम्। यद्वा सृष्टेस्तु सङ्ख्यातं मया कालान्परे द्विजाः। एतत्कालान्तरं ज्ञेयमहर्वै पारमैश्वरम्। रात्रिश्च तावती ज्ञेया परमेशस्य कृत्स्नशः। अहस्तस्य तु या सृष्टीरात्रिश्च प्रळयस्तथा। अहर्न विद्यते तस्य न रात्रिरिति धारयेत्। उपचार एषः क्रियते लोकानां हितकाम्यया"
॥ ५० ॥

इत्थमतिशयितमहिम्ना परमपुरुषेणाप्युपासनीयस्य तदभिजनहिरण्यगर्भजातत्वमनयैवोपनिषदा निराकृतमित्याह—




एषा महोपनिषदाह हिरण्यगर्भं
जातं त्वदेव भगवन्प्रथमं सुराणाम्
नारायणाभिजनमेनमथापि मन्दा-
श्शंसन्ति तत्रभवतः कतिचित्प्रसूतिम् ॥ ५१ ॥

"यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानं स नो देवश्शुभया स्मृत्या संयुनक्तु" इत्येषा महोपनिषत्सुराणां प्रथमं हिरण्यगर्भं त्वदेव भवत एव जातमाह। विश्वाधिको रुद्रोमहर्षिः देवानां प्रथमं हिरण्यगर्भं ब्रह्माणं पुरस्ताज्जायमानं पश्यत पश्यतीति वर्तमानप्रयोगान्मुहुर्मुहुः पश्यतीत्यर्थः पश्यत इति छान्दसः स देवश्शुभया ब्रह्मणो विष्णुर्जनयितेति भ्रान्तिज्ञानातीतया स्मृत्या नस्संयुनक्तु। इति श्रुतेरर्थः। तथाच पुराणवचनम्। "यस्सर्वासां देवतानाञ्च हेतुः यो वै विष्णोरधिकः यो महर्षिर्ब्रह्माणं यः पश्यते जायमानन्नित्यं सोस्मान्संमतौ संयुनक्ति"। इति। आदिसर्गे परमेश्वरादेव ब्रह्मविष्णुरुद्राणामुत्पत्तिश्श्रूयते। "पुरुषाधिष्ठितात्पूर्वमव्यक्तादीश्वराज्ञया। बुध्यादयो विशेषान्ता विकाराश्चाभवन्क्रमात्। ततस्तेभ्यो विकारेभ्यो रुद्रो विष्णुः पितामहः। जगतः कारणत्वेन त्रयो देवा विजज्ञिरे"। इति। विकारेभ्यः पूर्वमीश्वराज्ञया पुरुषाधिष्ठितादव्यक्ताद्रुद्रविष्णुपितामहास्त्रयो देवा विजज्ञिर इत्यर्थः। कारणत्वेनेतिलिङ्गात् श्रुतिश्च भवति। "ध्यायीतेशानम्"। इत्यादि तस्मात् ब्रह्मविष्णुरुद्रेन्द्रपूर्वकं जगत्संप्रसूत इति तस्मादिति नि-

मित्तपञ्चमी तस्मादीशाननिमित्तादव्यक्तादव्यक्तशब्दवाच्यात्पुरुषाधिष्ठितात्प्रत्ययपरपर्य्यायात्प्रधानाद्रुद्रविष्णुब्रह्मादिकारण मूर्त्यात्मकक्रमेण जगदुत्पन्नमित्यर्थः। तदेवं ईश्वरादेव निमित्तकारणाद्रुद्रविष्णुपितामहादीनामादिसर्ग उत्पत्तिश्रवणादवान्तरकल्पेषु तु परमेश्वरमाराध्य ब्रह्मा विष्णुं जनयति तत्र श्रुतिः। "षड्ढोता वै भूत्वा प्रजापतिरिदं सर्वमसृजत"। इत्यारभ्य। "यजुर्भ्योधिविष्णुम्"। इति। विष्णुर्वा परमेश्वरमाराध्य ब्रह्माणं जनयति तत्र श्रुतिः। "नारायणाद्ब्रह्मा ऽजायत"। इति तथा च पुराणे श्रूयते। "पुरा नारायणो नाम कल्पे वै मेघवाहने। दिव्यं वर्षसहस्रं तु मेघो भूत्वावहद्धरम्। तस्य भावं समालक्ष्य विष्णोर्विश्वजगद्गुरुः। शर्वस्सर्वात्मभावेन प्रददौ शक्तिमव्ययाम्। शक्तिं लब्ध्वा स सर्वात्मा शर्वात्सर्वेश्वरेश्वरात्। ससर्ज भगवान्विश्वं विष्णुर्विश्वसृजा सह। विष्णोस्तु वैभवं दृष्ट्वा सृष्टस्तेन पितामहः। ईर्ष्यया परया ग्रस्तः प्रहसन्निदमब्रुवीत्। गच्छ विष्णो मया ज्ञातस्तव सर्वस्य कारणम्। आवयोरधिकश्चास्ति स रुद्रो नात्र संशयः। तस्य देवादिदेवस्य प्रसादात्परमेष्ठिनः। सृष्टा त्वं हि भवानद्य पालकः परमार्थतः। अहञ्च तपसाराध्य रुद्रं त्रिभुवनेश्वरम्। त्वया सह जगत्सर्वं स्रक्ष्याम्यद्य न संशयः। एवं विष्णुमुपालभ्य भगवानब्जसंभवः। एवं विज्ञापयामास तपसा प्राप्य शङ्करम्। भगवन्देवदेवेश विश्वेश्वर महेश्वर। त्वत्त एव समुत्पत्तिरावयोस्सदृशी यतः। तस्य भक्त्या यथा पूर्वं प्रसादं

कृतवानसि । तथा ममापि तत्सर्वं दातुमर्हसि शङ्कर । इति विज्ञापितस्तेन भगवान्भगनेत्रहा । स्मयन्निव ददौ सर्वन्तस्यापि सघृणानिधिः । लब्ध्वैवमीश्वरादेव ब्रह्मा सर्वात्मतां क्षणात् । त्वरमाणो ऽथ सङ्गम्य ददर्श पुरुषोत्तमम् । क्षीरालयार्णवे शुभ्रे विमाने सूर्यसन्निभे । हेमरत्नचिते दिव्ये मनसा तेन निर्मिते । अनन्तभोगिशय्यायां शयानं पङ्कजेक्षणम् । चतुर्भुजमुदाराङ्गं सर्वाभरणभूषितम् । शङ्खचक्रधरं सौम्यं चन्द्रबिम्बानिभाननम् । श्रीवत्सवक्षसं देवं प्रसन्नमधुरस्मितम् । रमामृदुकराम्भोजस्पर्शरक्तपदाम्बुजम् । क्षीरार्णवामृतमिव शायितं योगनिद्रया । तमसा कालरुद्राख्यम् रजसा कनकाण्डजम् । सत्वेन सर्वगं विष्णुं निर्गुणं परमेश्वरम् । तन्दृष्ट्वा पुरुषं ब्रह्मा प्रगल्भमिदमब्रवीत् । ग्रसामि त्वामहं विष्णो त्वमात्मानं यथा पुरा । तस्य तद्वचनं श्रुत्वा प्रतिबुध्य पितामहम् । उदैक्षत महाबाहुस्स्मितमीषच्चकार च । तस्मिन्नवसरे विष्णुर्ग्रस्तस्तेन महात्मना । सृष्टश्च ब्रह्मणा सद्यो भ्रुवोर्मध्यादयत्नतः । तस्मिन्नवसरे साक्षाद्भगवानिन्दुभूषणः । शक्तिं तयोरपि द्रष्टुमरूपो रूपमास्थितः । प्रसादमतुलं कर्तुं पुरा दत्तवरस्तयोः । अगच्छत्तत्र यत्रेमौ ब्रह्मनारायणौ स्थितौ । अथ तुष्टुवतुर्देवं प्रीतौ भीतौ च कौतुकात् । प्रणेमतुश्च बहुशो बहुमानेन दूरतः । भवोऽपि भगवानेतावनुग्रह्य पिनाकभृक् । सादरं पश्यतोरेव तयोरन्तरधीयत" । इति । अथापि ब्रह्माणं नारायणाभिजनं नारायण अभिजनो जन्मभूमिर्यस्य तम् । "कुलेष्यभिजनो

जन्मभूम्यामपि"। इत्यमरः। कतिचिन्मन्दाः स्वल्पज्ञाः। "मन्दास्सरोगनिर्भाग्यस्वल्पज्ञाः परसूर्यजाः" इति यादवः। तत्र ब्रह्मणि भवतः प्रसूतिं शंसन्ति। "प्रविश्य ब्रह्मणो रूपन्तत्र तत्र ददर्शसः। विस्मितः कमलाकान्तो निर्जगाम विधेर्मुखात्। सहस्रशीर्षापुरुषः पुनर्ब्रह्माणमब्रवीत्। विधे त्वमपि मद्देहं प्रविश्याशु विलोकय। चराचरात्मकान्सर्वान्सदेवासुरमानुषान्। ततो विरिञ्चिर्भगवानुदरं कमलापतेः। प्रविश्य सकलान्लोकान्दृष्ट्वा भूद्विस्मितो विधिः। नापश्यन्निर्गमद्वारं पिहितं चक्रपाणिना। ततोऽसौ नाभिचक्रस्य नाळमार्गमविन्दत। निर्गतस्तेन मार्गेण ब्रह्माब्रह्मविदां वरः। तपस्तताप परमं न किञ्चित्प्रत्यपद्यत। गते बहुतिथे काले समभूत्क्रोधमूर्च्छितः। प्राणात्मकस्समुद्भूतो ललाटाद्ब्रह्मणो हरः"। इत्यादि पुराणवचनार्थमजानन्तः नारायणनाभिकमलनिर्गममात्रेण ब्रह्मणो नारायणादुत्पत्तिर्भवतो ब्रह्मणो ललाटप्रादुर्भावमात्रेण त्वदुत्पत्तिश्च भ्रान्त्या शंसन्ति यद्येतावता तज्जन्यत्वं स्यात्तदा ब्रह्मणः पद्मज इतिवद्विष्णोरक्षज इतिवदीश्वरस्य ललाटजत्वं रूढं स्यात् तत्तु न दृश्यते। पुत्रशब्दो गौण्या वृत्या ब्रह्मणः प्रशंसार्थं रुद्रे वर्तत इति भावः ॥ ५१ ॥

प्राणात्मकस्समुद्भूता ललाटाद्ब्रह्मणो हरः। सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुदभूत्प्रभुः। इत्येवमादिभिराशङ्किताभीश्वरस्स हिरण्यगर्भादुत्पत्तिं प्रत्याचष्टे—

मध्ये ललाटमरविन्दभुवः क्षणेन

दृष्टो भवानिति क एष निकर्षवादः ।

योगाधिरूढमनसश्शिव मादृशोऽपि

स्थानेषु पञ्चसु न कस्य तवोपलम्भः ॥५२॥

अरविन्दभुवो ब्रह्मणो मध्येललाटं फालमध्ये । पारे मध्ये षष्ठ्या वा । इति षष्ठ्यर्थेऽव्ययीभावः । ललाटमध्ये भवान् क्षणेन दृष्ट इत्येष भवतः को निकर्षवादः निकृष्टवचनन्न-भवतीत्यर्थः । तथाच ब्रह्माण्डपुराणे । "सृष्ट्यर्थं जगतः पूर्वं शङ्करं नीललोहितम् । ललाटे चिन्तयन् ब्रह्मा तपस्युग्रे व्यवस्थितः । तल्ललाटादभूच्छम्भुस्सृठ्यर्थं तन्नदूषणम् ।" इति कथन्नभव-तीत्याशङ्क्य एवं विधप्रादुर्भावस्य भवतस्सर्वत्र सम्भवादित्याह । योगेति योगाधिरूढमनसो मादृशो मनुष्यमात्रस्यापि कस्य हृत्पद्म-कर्णब्रह्मरन्ध्रतालुभ्रूमध्याख्येषु पञ्चसुत्वदभिव्यक्तिस्थानेषु तवोप-लम्भो न सर्वस्यापि भोगसमाहितमनसस्तवोपलम्भो न विद्यत इत्यर्थः ॥ ५२ ॥

एतद्वै महोपनिषिदं वेदानां गुह्यमिति श्रुतिवाक्येनास्य नारायणोपनिषदो महत्वमुक्तं तत्र कारणमाह——

ब्रह्माणि पञ्च तनवश्शिवमन्द्ररूपा-

जीवातवः पशुपते शिवसंहितानाम् ।

**रुद्रेषु पुण्यमिव पञ्चकमक्षराणा-**
**मस्यां महोपनिषदीति महत्ववादः ॥ ५३ ॥**

शिवसंहितानां जीवातवः जीवनहेतवः प्राणभूता इत्यर्थः "सद्योजातं प्रपद्यामि सद्योजाताय वै नमः"। इत्यादि "सदाशिवो" मित्यन्तं पञ्चब्रह्माण्येव शिवमन्त्ररूपास्तनवः तथा च लैङ्गे । "ईशानमीशमकुटं पुरुषास्यं पुरातनम् । अघोरहृदयं विद्याद्वामगुह्यं सदाशिवम्। सद्यः पादं महादेवं महायोगीन्द्रभूषणम्"। इति। तथात्र वायवीयसंहितायाम्। "ईशानमकुटं देवं पुरुषास्यं पुरातनम्। अघोरहृदयं तद्वद्वामगुह्यं महेश्वरम्। सद्यः पादश्च तन्मूर्तिमष्टत्रिंशत्कलामयम्"। इत्यादि। अस्यां महोपनिषदि रुद्रानुवाकेषु। "पुण्यमक्षराणां पञ्चकमिव पञ्चाक्षरमन्त्र इवानुप्रविष्टा" इति महत्ववादः । पञ्चाक्षरीमन्त्रानुप्रवेशादेव रुद्रैकादशिन्याः पावनत्वं तथा पौराणिकाः। "तस्मात्पञ्चाक्षरी विद्या तत्रुद्रीयमध्यगा। पावनी सर्वपापानां रुद्रैकादशिनी ततः"। इति महेश्वर महाराजसम्बन्धित्वद्योतनार्थं यथा श्रीरुद्रत्वं नाम पञ्चाक्षराणि निहितानि तद्वत्तदीयत्वद्योतनार्थं तन्नामरूपाणि पञ्चब्रह्माण्यस्याश्शिरसि विधात्रा लिखितानि तस्मादेषा महोपनिषद्देवतान्तरप्रतिपादनपरेति सम्भावनापि कर्तुं न शक्यत इति भावः ॥ ५३ ॥

ईशानस्सर्वविद्यानामिति पञ्चब्रह्ममन्त्रगतेन ब्रह्माधिपति रित्यनेन ब्रह्म चासावधिपतिश्चेति निषादस्थपतिवत्कर्मधारयसमासा-

श्रयणेनेश्वरस्य ब्राह्मणाधिपत्यप्रतिपादनेन सर्वेषां ब्राह्मणानां कूटस्थत्वात् ब्रह्मणोधिपतेरीश्वरादेव ब्राह्मणस्यात्मनो जन्मेति समुत्पन्नहर्षः पञ्चमब्रह्मार्थमन्त्रमाह—

विद्येश्वरस्त्वमसि भूतपतिस्त्वमेक-
स्स्रष्टुर्भवानधिपतिस्सृजति प्रपञ्चम् ।
यद्ब्राह्मणान्प्रति तव श्रुतमाधिपत्यं
तद्ब्रह्मणो मम सदाशिव जन्मलाभः ॥ ५४ ॥

त्वं विद्येश्वरोऽसि अष्टादशानां विद्यानां कर्ता ऽसि तथाच पुराणवचनम् । "अष्टादशानामेतासां विद्यानां भिन्नवर्त्मनाम् । आदिकर्ताकविस्साक्षाच्छूलपाणिर्महेश्वरः"। एकस्त्वं भूतपतिरसि स्रष्टुः ब्रह्मणो ऽधिपतिर्भवान् प्रपञ्चं सृजति यस्मात्कारणात् ब्राह्मणान् प्रति ब्राह्मणस्य तवाधिपत्यं श्रूयते ब्रह्माधिपतिरिति पदेन ब्रह्म चासावधिपतिरिति कर्मधारयसमासाश्रयणेनेश्वरस्य ब्राह्मण्यब्राह्मणाधिपत्यप्रतिपादनात् हे सदाशिव भवतो मम जन्मलाभः जन्मसिद्धिः ॥ ५४ ॥

ननु वेदस्तत्वं ब्रह्मेत्यमरसिंहवचनात् ब्रह्मणो वेदस्याधिपतिरित्यर्थसम्भवात्कथं ब्रह्माधिपतिरित्यनेनेश्वरस्य ब्राह्मण्यतदाधिपत्यनिश्चय इत्यत आह—

विद्येश्वरत्वपुनरुक्ततया न वाच्यं
वेदाधिपत्यमयमेव महेश देवः ।

**विद्या भवन्ति शतशः प्रविभज्यमाना-**
**स्त्रोतांसि किन्न सरितेव पृथक्कृतानि ॥५५॥**

विद्येश्वरत्वपुनरुक्ततया'ईशानस्सर्वविद्याना'मित्येतदुक्तवि-द्येश्वरत्वपौनरुक्त्यप्रसङ्गाद्ब्रह्माधिपतिरित्यनेत वेदाधिपत्यं न वाच्यं ननु विद्याधिपत्यवेदाधिपत्ययोः कथं पौनरुक्त्यमित्यत आह। अयमिति हे महेश वेदाः शतशः प्रविभज्यमानाः पृथक्क्रियमाणा विद्याः अयमेव भवति वेद एव भवति तथा हि सरिता पृथक्कृतानि स्रोतांसि सरिन्नभवति किं भवत्येवेत्यर्थः ब्रह्म शब्दः पर-ब्रह्मणि कमलासने वेदे ब्राह्मणेषु च वर्तते ब्राह्मणोधिपतिरित्यनेन कमलासनाधिपतित्वमुक्तं विद्याधिपतिरित्यनेन वेदाधिपतित्वमुक्तं ब्रह्म स्वयमेव स्वस्याधिपतिर्नभवति तस्मात्परब्रह्मणो ऽधिपति-रन्यः कश्चन वक्तुं न शक्यं तस्मात्परन्नास्तीति श्रुतौ श्रूयते। "यस्मात्परं नापरमस्ति किञ्चित्"। इति। ततो यदुत्तरतरं तदरूपमनामयम्। परमेश्वरादधिकं वस्तु नास्तीति वायवीयसंहि-तायां प्रश्नप्रतिवचनाभ्यां निश्चीयते। मुनयः। "भगवन्नन्धका-रेण महता वयमावृताः। खिन्ना विवदमानाश्च न पश्यामोऽत्र यत्परम्। त्वं हि सर्वजगद्धाता सर्वकारणकारणम्। त्वया ह्यविदितं नाथ नेह किञ्चिच्च विद्यते। कः पुमान्सर्वतत्त्वेभ्यः पराणामपरः परः। विशुद्धः परिपूज्यश्च शाश्वतः परमेश्वरः। केनवा चित्रकृत्येन प्रथमं सृज्यते जगत्। अन्तकाले पुनस्सर्वं कस्मिन्प्रलयमेष्यति। कस्य वश्यानि भूतानि कस्सर्वस्य नियोजकः। कथं स पुरुष-

शक्यो द्रष्टुमस्माभिरीश्वरः। एवं प्रष्टस्तदा ब्रह्मा विस्मयस्मेर-वीक्षणैः। देवानां दानवानां च मुनीनाञ्चैव सन्निधो। उत्थाय सुचिरं ध्यात्वा रुद्र इत्युच्चमुच्चरन्। आनन्दक्लिन्नसर्वाङ्गः कृताञ्जलिरभाषत। ब्रह्मा। यतो वाचो निवर्तन्ते अप्राप्य मन-साऽपि च। आनन्दं यस्य वै विद्वान्नबिभेति कुतश्चन। यस्मा-त्सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वकम्। सह भूतेन्द्रियैस्सर्वैः प्रथमं संप्रसूयते। कारणानां च यो धाता भर्ता परमकारणम्। न संप्र-सूयते तस्मात्कुतश्चन कदाचन। सर्वेश्वरेण संपन्नो नाम्ना सर्वेश्वर-स्स्वयम्। सर्वैर्मुमुक्षुभिर्ध्येयश्शम्भुराकाशमध्यगः। यो अग्रे मां विदधे पुत्रं ज्ञानञ्च प्रहिणोति मे। यत्प्रसादान्मया लब्धं प्राजा-पत्यमिदं पदम्। ईशो वृक्ष इवस्तब्धो य एको दिवि तिष्ठति। तेनेदमखिलं पूर्णं पुरुषेण महात्मना। एको बहूनां जन्तूनां निष्क्रियाणाञ्च सत्क्रियः। य एकं बहुधा बीजं करोति स महेश्वरः। जीवैरेभिरिमान्लोकान्सर्वानीशो य ईशते। य एको भगवान्रुद्रो न द्वितीयो ऽस्ति कश्चन। सदा जनानां हृदये सन्नि-विष्टोऽपि यः परैः। आलक्षो लक्षयेद्विश्वमधितिष्ठति सर्वदा। यस्तु कालात्मयुक्तानि कारणान्यखिलान्यपि। अनन्तशक्तिरेको वै भगवानधितिष्ठति। केवलं शिव एको वै यस्मात्प्रज्ञा विनिस्सृता। यस्य पुंसः परा शक्तिर्भावगम्या मनोहरा। निर्गुणस्स्वगुणैरेव निगूढा निष्कळा सती। न यस्य कार्यकरणे न समो नो न चाधिकः। स्वाभाविकी परा नित्या बलज्ञानक्रिये अपि। यच्चेदं

क्षरमव्यक्तं यदप्यमृतमक्षरम् । तावुभावक्षरात्मासावेको देवस्स्वयं हरः । ईशते तमभिध्यानाद्योजनात्यन्तभावतः । भूयो ह्यस्मात्पशोरन्ते विश्वमाया विवर्तते । यस्मान्न भासते विद्युन्न सूर्यो न च चन्द्रमाः । यस्य भासा विभातीति इत्येषा शाश्वती श्रुतिः । एष देवो महादेवो विज्ञेयस्तु महेश्वरः । न तस्य परमं किञ्चित् पदं समधिगम्यते । अयमादिरनाद्यन्तस्स्वभावादेव निर्मलः । स्वतन्त्रः परिपूर्णश्च स्वेच्छाधीनश्चराचरः । अप्राकृतवपुश्श्रीमान् लक्ष्यलक्षणवर्जितः । अमुक्तमोचकश्चायं कालः कालप्रचोदकः । सर्वोपरिगतावासः सर्वावासश्च सर्ववित् । षड्विधाध्वमयस्यास्य सर्वस्य जगतः प्रभुः । उत्तरोत्तरभूतानामुत्तरश्च निरुत्तरः । अशेषविषयामोघशुद्धबुद्धिविजृम्भणः । आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा । अनन्तानन्दसन्दोहमकरन्दमधुव्रतः । अखण्डजगदण्डानां पिण्डीकरणपण्डितः । औदार्यवीर्यगाम्भीर्यमाधुर्यमकरालयः । नैवास्य सदृशं वस्तु नाधिकश्चापि कश्चन । अमलस्सर्वभूतानां राजराजस्सतिष्ठति "। इति तस्माद्ब्रह्माधिपतिरित्यनेन परिशेषाद्ब्राह्मणपतित्वमेव सिद्धं तस्माद्ब्राह्मणैर्विशेषतः परमेश्वर एवोपासनीयः। तदुक्तं कूर्मपुराणे । "विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेत्"। इति ॥ ५५ ॥

इति विंशतिसङ्ख्याकैश्श्लोकैरीशस्य लक्षणम् । याज्ञिक्योपनिषत्प्रोक्तोपास्यत्वप्रतिपादकम् । गायत्रीवाच्यतोवायमुपोद्घातकथा ततः । आदित्योपनिषद्वाचां तात्पर्यं वक्ष्यतः परम् ॥

आदित्यमृग्यजुषसामनिधानकोशे
बिम्बे निविष्टमधितिष्ठति पूरुषो यः।
एषा तमेष इति साभिनया भवन्तं
भूताधिपत्यवचनेन शशंस नाम्ना ॥ ५६ ॥

ऋग्यजुषसामनिधानकोशे ऋक्च यजुश्च ऋग्यजुषम्। "अचतु"रेत्यादिसूत्रेणाच्प्रत्ययान्तत्वेन निपातितं तच्च साम च ऋग्यजुषसामानि तान्येव निधानं निधिः तस्य कोशे भाण्डे बिम्बे मण्डले निविष्टं स्थितमादित्यं यः पूरुष अधितिष्ठति। पाघ्रादिसूत्रेण तिष्ठादेशः। अधिशीङ्स्थासां कर्म। इति कर्मत्वम्। "आदित्यो वा एत एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलं स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले अर्चिषि पुरुषस्तानि यजूंषि स यजुषां मण्डलं स यजुषां लोकस्सैषा त्रय्येव विद्या तपति स एषोऽन्तरादित्ये हिरण्मयः पुरुषः"। इति। "एष भूतानामधिपतिरित्येषोपनिषत् एष इत्येतच्छब्देन साभिनया अभिनयसहिता अभिनयोऽत्र प्रत्यक्षत्वनिर्देशः पुरोवस्थितं हस्ताद्दर्शयन्तीव भूताधिपत्यवचनेन भूताधिपतित्वप्रतिपादकेन नाम्ना भूताधिपतिसंज्ञया शशंस उवाच तुष्टावेति वा। ननु। "ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः। केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः"। इत्यनेन सवितृमण्डलमध्यवर्ती नारायण एव प्रतीयत इति चेन्न।

"औदुम्बरीं स्पृष्ट्वोद्गाये"दिति श्रुतिः। "औदुम्बरी सर्वा वेष्टयितव्ये"ति स्मृतिः। तत्र श्रुतिविरोधेन सर्वावेष्टनस्मृतेर्बाधः तद्वद्विरोधाधिकरणन्यायेन एष भूतानामधिपतिरिति सवितृमण्डलमध्यवर्ती परमेश्वर इति प्रतिपादकश्रुतिविरोधन्यायेन नारायणस्य सवितृमण्डलमध्यवर्तित्वप्रतिपादकस्मृतेर्बाधोपपत्तेः। तस्मात्सवितृ मण्डलमध्यवर्ती परमेश्वर एवेति सिद्धं अत एव "सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्। नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम्" इदमपि सङ्गच्छते ॥ ५६ ॥

तत्प्रसङ्गान्नमो हिरण्यबाहव इति वाक्यस्यार्थमाह—

उक्तो हिरण्यपतिरेषहिरण्यबाहु-
रुक्तो ऽम्बिकापतिरुमापतिरेष उक्तः।
आहुर्भवन्तमधिदैवतमुष्णरश्मे-
रातस्तदर्चनविधौ भगवन्नभिज्ञाः ॥ ५७ ॥

एष ईश्वरो हिरण्यपतिरुक्तः। तत्र श्रुतिः। "हिरण्यपतये"। इति। हिरण्यपतित्वमीश्वरस्यैव सम्भवति। "यस्य रेतसा परस्सहस्रं गिरयस्सह मेरुणा हिरण्मया बभूवुः"। इति। यस्य वीर्यादण्डमपि हिरण्मयम्। तथाच वायवीयसंहितायाम्। "रञ्जयित्वा गिरीन्सर्वान्काञ्चनीकृत्य मेरुणा। ततश्चिरेण कालेन सञ्जज्ञे तत्र तेजसि"। इति। आदित्यपुराणे। "नारायणं पुरस्कृत्य प्रसूताः सर्वदेवताः। गर्भशल्यविनिर्मुक्ता जातास्ते सु-

खिनो जनाः । शार्वेण तेजसा तेन रञ्जितो मेरुपर्वतः । ततः काञ्चनतां प्राप्तस्मशैलस्सवनो महान्। शार्वं तेजो धृतं यस्माद्देवैश्शुक्रपुरोगमैः । तस्माज्जरादिनिर्मुक्ता अमराश्च सुरोत्तमाः । सिद्धाश्च मुनयश्चैव ये केचित्तत्र संस्थिताः । तृणगुल्मलताश्चैव जलस्थलरुहाश्च ये । सर्वे काञ्चनसङ्काशास्सञ्जातास्तत्प्रसादतः"। इति सनत्कुमारसंहितायामपि विष्णुवचनम् । विष्णुः । "महेश्वरस्य यद्रेतः पवित्रं शुक्रमुत्तमम् । समाकृष्टं पुरा गौर्या दुराधर्षमतोन्यतः। देवतानां हितार्थाय तद्वह्नौ प्राक्षिपत्परम्। मुखेनैवापिबद्वह्नी रेतश्शुक्रं पिनाकिनः । ततो ज्वलति वै वह्निः काष्ठमग्नौ स्थितं यतः । तदौष्णेन परीतप्ता गङ्गायां प्राक्षिपत्पुनः । क्वथिताथ पुनर्गङ्गा ससमुद्रसरिद्गणा । भूम्यां निपातयामास पर्वतेष्वयभ्यपातयत् । तप्तायःपिण्डवद्भूमिस्सद्वीपकुलपर्वता । ततस्तदीश्वरेच्छातः स्त्रीसरेणु प्रमाणकम् । दग्ध्वा समस्तभुवनं यातं शरवणं प्रति । ततस्कन्दस्समभवत्काशं संपर्कयन्ज्वलन् । तत्स्वच्छस्वर्णमभवद्विप्रुषो या स्समुत्थिताः । तास्वेका न्यपतन्मेरौ वायुनात्यन्तसंयुता । वृक्षगुल्मलतागुप्तो मेरुः परमकाञ्चनः। स देवधिष्ण्यनगरं प्रान्ते जम्बूः क्वचिद्गिरेः । तस्य मूलेन संप्राप्तो न्यवर्तत महातरुः । यथा मेरुस्तथा जम्बूर्यथा जम्बूस्तथा गिरिः - तस्य पर्वतमात्राणि फलानि लघुबीजिनः। महारसानि न्यपतन्सर्वर्तुष्वविशेषतः । ईशितुर्हृदयाज्जातं भोक्तॄणाञ्च प्रियं नवम् । महत्प्रजायते हेम्नश्शिवो निष्कं हि निष्कळः । स्त्रियस्सर्वा महा-

देवी साक्षाद्धेस महेश्वरः। शिवलिङ्गादभूदण्डं हिरण्मयमजोद्भवम्। यद्यद्धिरण्यं तत्सर्वं शिवरेतो न संशयः"। इति। तथा च रामायणेपि। "श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम्। उत्ससर्ज तदा तेजस्स्रोतोभ्यो हि तदानघम्। तदस्यान्निर्गतस्तस्मात्तप्तजाम्बूनदप्रभम्। काञ्चनं धरणीं प्राप्तं हिरण्यमतुलप्रभम्"। इति। एष हिरण्यबाहुः। तत्र श्रुतिः। "नमो हिरण्यबाहवे"। इति। बाहुशब्दोऽङ्गान्तराणामप्युपलक्षणम्। हिरण्मयसर्वावयवः। तत्र श्रुतिः। "य एषोऽन्तरादित्ये हिरण्मयः पुरुषः"। इति। छान्दोग्येच। य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते स हिरण्यश्मश्रु हिरण्यकेश आप्रणखात्सर्वएव सुवर्णस्तस्य। इति। पुण्डरीकमेव अक्षिणीति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्रीकसादृश्यकथनार्थं न तृतीयलोचनाभावपरम्। तथाहि। पुत्त्रयवन्तं ब्राह्मणं प्रति द्वौ पुत्रावग्निकल्पावित्युक्ते द्विसङ्ख्याग्रहणं न तृतीयपुत्रनिषेधपरं किन्तु पुत्रद्वयस्याग्निसादृश्यद्योतनपरं तद्वदत्रापि कमुदकं रश्मिभिः पिबतीति कपिरादित्यः तेनासितं विकसितं पुण्डरीकं ययास्फुरति तथा परमेश्वरस्य लोचनद्वयं तृतीयलोचनं तु मुकुळितपुण्डरीकसममित्यभिप्रायः। तथा च काळिदासवाक्यम्। "दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरंकुरयां चकार। धत्ते तदाप्रभृति देवि ललाटनेत्रं सत्यं ह्रियैव मुकुळीकृतमिन्दुमौळेः"। इति। एषो अम्बिकापतिरुक्तः। "अम्बिकापतये"। इति श्रुतिः। "उमापतये" इति। तथा च

पुराणवचनम्। "हिरण्यबाहुर्भगवान्हिरण्यपतिरीश्वरः। अम्बिका-पतिरीशानः पिनाकी वृषवाहनः। एको रुद्रः परं ब्रह्म पुरुषः कृष्णपिङ्गळः। वालाग्रमात्रे हृन्मध्ये विचिन्त्यो दहरान्तरे। हिरण्यकेशः पद्माक्षो ह्यरुणस्ताम्र एव च। यो ऽवसर्पत्यसौ देवो नीलग्रीवो हिरण्मयः"। इति। एवंविधं त्वां भास्करस्येश्वरो देव तेतिकल्पविद आहुरित्याह। आहुरिति उष्णरश्मेस्सूर्यस्याधिदैवतमधिष्ठातारमाहुः हे भगवन् आतः अतः तदर्चनविधौ सूर्य-पूजाकरणे वयमभिज्ञाः सूर्यस्याधिष्ठाता परमेश्वर इति बोधायनेनाप्युक्तम्। "ईश्वरं भास्करं विद्यात् स्कन्दमङ्गारकन्तथा। शुक्रं शचीपतिं विद्यादुमां चैव निशाकरम्"। इत्यादि तथा च लैङ्गे ऽप्युक्तम्। देवर्षयः। "भगवन्केन मार्गेण पूजनीयो द्विजातिभिः। कुत्र वा केन रूपेण वक्तुमर्हसि शङ्कर। कस्याधिकारः पूजायां ब्राह्मणस्य कथं प्रभो। क्षत्रियाणां कथं देव वैश्यानां वृषभध्वज। शूद्राणाञ्च कथं को ऽथ कुण्डगोळादीनाञ्च वा। हिताय जगतां सर्वमस्माकं वक्तुमर्हसि। सूतः। तेषां भावं समालोक्य मुनीनां नीललोहितः। प्राह गम्भीरया वाचा मण्डलस्थस्सदाशिवः। मण्डले चाग्रतोऽपश्यं देवदेवं सहोमया। देवाश्च मुनयस्सर्वे विद्युत्कोटिसमप्रभम्। अष्टबाहुं चतुर्वक्त्रं द्वादशाक्षं महाभुजम्। अर्द्धनारीश्वरं देवं जटामकुटधारिणम्। सर्वैराभरणैर्युक्तं रक्तमाल्यानुलेपनम्। रक्ताम्बरधरं सृष्टिस्थितिसंहारकारणम्। तस्य पूर्वमुखं पीतं प्रसन्नं पुरुषात्मकम्। अघोरं दक्षिणं वक्त्रं

नीलाञ्जनचयोपमम् । दंष्ट्राकराळमत्युग्रं ज्वालामालासमावृतम् । रक्तश्मश्रुजटायुक्तमुत्तरं विद्रुमप्रभम । प्रसन्नं वामदेवाख्यं वरदं विश्वरूपिणम् । पश्चिमं वदनं तस्य गोक्षीरधवळं शुभम् । मुक्ताफलमयैर्हारैर्भूषितं तिलकोज्वलम् । सद्योजातमुखं दिव्यं भास्करस्य स्मरारिणः । आदित्यमग्रतोऽपश्यं चतुर्वक्त्रं च पूर्ववत् । भानुं दक्षिणतोऽपश्यं चतुर्वक्त्रं च पूर्ववत् । रविमुत्तरतोऽपश्यं चतुर्वक्त्रञ्च पूर्ववत् । विस्तारां दक्षिणे पूर्वं सुतरां दक्षिणे स्थिताम् । बोधिनीं पश्चिमे भागे मण्डलस्य प्रजापतेः । आप्यायिनीञ्च कौबेर्यां एकवक्त्रां चतुर्भुजाम् । सर्वाभरणसंपन्नाश्शक्तयश्शक्तयस्सर्वं संमताः । ब्राह्मणं दक्षिणे भागे विष्णुं वामे जनार्दनम् । ऋग्यजुस्साममार्गेण मूर्तित्रयमयं शिवम् । वैराग्यैश्वर्यसंयुक्त प्रभाते विमले तथा । पीतं सर्वेश्वरं देवमाराध्य परमे सुखे । दीप्तां दीपशिखाकारां सूक्ष्मां विद्युत्प्रभां शुभाम् । चतुर्वर्णां चतुर्वक्त्रां देवीं वै सर्वतोमुखाम् । सोममङ्गारकं देवम् बुधं बुद्धिमतां वरम् । बृहस्पतिं बृहद्बुद्धिं भार्गवं तेजसां निधिम् । मन्दं मन्दगतिं सर्वास्समन्तात्तस्य देवताः । सूर्यश्शिवो जगन्नाथस्सोमस्साक्षादुमा स्वयम् । पञ्च भूतानि शेषाणि तन्मयं च चराचरम् । एवञ्च मुनयस्सर्वे देवदेवमुमापतिम् । कृताञ्जलिपुटास्सर्वे मुनयो देवतास्तथा । अस्तुवन्वाग्भिरर्थ्याभिर्वरदं नीललोहितम् ” । इत्यादि । रामायणेऽपि । ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे । भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ” । इत्यादि ॥ ५७ ॥

आदित्यो वा एष इत्याद्यनुवाकोक्तमर्थं संगृह्य दर्शयति ।

**यो मण्डलं तपति यश्च तदन्तरात्मा**
**या चानयोर्भवति भूतपते विभूतिः ।**
**जानान एतदपि यत्फलमश्नुते च**
**सर्वं यथावदिह तत्कथितं क्रमेण ॥ ५८ ॥**

यः आदित्यः मण्डलं तपति यश्च तदन्तरात्मा ईश्वरः अनयोः सूर्यतदन्तरात्मनोः या च विभूतिर्भवति विद्यते एतज्जानानो विद्वान् यत्फलमश्नुते तत्सर्वमिहादित्यानुवाके क्रमेण यथावत्कथितम् । तथा च श्रुतयः । "आदित्यो वा" इत्यादि । "आदित्यो वै तेज ओजो बलं यशश्चक्षुश्श्रोत्रमात्मा मनो मन्युर्मृत्युस्सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत्सत्यमन्नमायुरमृतो जीवो विश्वः कतमस्स्वयम्भुप्रजापतिः संवत्सर इति संवत्सरो असावादित्यो य एष पुरुषः एष भूतानामधिपतिः ब्रह्मणस्सायुज्यं सलोकतामाप्नोत्येतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति य एवं वेदे" त्युपनिषत् । आदित्यो वा इत्याद्यनुवाकद्वये आदित्यमण्डले रश्मीमय्यर्चिर्दीप्यत इति मण्डलप्रभामुक्त्वा ऽर्चिषि पुरुष इति मण्डलाभिमानी सूर्य इति अन्तरादित्यो हिरण्मयः पुरुष इति हिरण्मयपुरुषमादित्यान्तर्वर्तिनमुक्त्वा पुनरादित्यो वै तेज इत्यादिना तस्य विभूतिमभिधाय एष भूतानामधिपतिरिति भूतपतित्वेन तन्निर्दिश्य पुनः कीदृशः पुरुष इत्याकांक्षायां "सर्वो वै रुद्र" इत्यारभ्य आम्नि

कापतय उमापतये नमोनम इत्युपसंहृतः ब्रह्मण इत्यन्तानुवाकस्य प्रजापतिस्संवत्सर इतीतिशब्दस्यानुक्तसमुच्चयार्थत्वात् स्त्रीपुरुषात्मकं कृत्स्नं जगदीश्वरस्य विभूतिरिति वायवीयसंहितायां श्रूयते। "शङ्करः पुरुषा स्सर्वे स्त्रियस्सर्वा महेश्वरी। सर्वे स्त्रीपुरुषास्तस्मात्तयोरेव विभूतयः। पुल्लिङ्गमखिलं धत्ते भगवान्पुरशासनः। स्त्रीलिङ्गमखिलं देवी धत्ते सासर्वमङ्गळा। शब्दजातमशेषन्तु धत्ते शम्भुमनोरमा। अर्थस्वरूपमखिलन्धत्ते मुग्धेन्दुशेखरः"। इति ॥ ९८ ॥

एवमादित्यो वा इत्याद्यनुवाकतात्पर्यमभिधायैतत्प्रदेशपरिज्ञानमेव सावित्रीमन्त्रार्थपरिज्ञाने कारणमित्याह—

**मा नाम भूदखिलमन्यदिमं प्रदेश-**
**मध्यापितास्तदिति मन्त्रविदो भवन्ति।**
**वाच्यः किमस्य सविता सवितुर्वरेण्यः**
**किं वा भवानिति वितर्कपदं न तेषाम् ॥ ५९ ॥**

अन्यत् आदित्यो वा एष इत्यादि वेदान्तप्रदेशादन्यदखिलं वेदवाक्यजालं माभूत् नाम शब्दः प्रकाशे। "नामप्रकाशसम्भाव्यक्रोधोपगमकृत्स्न" इत्यमरः। मा प्रकाशीभवत्तित्यर्थः इमं प्रदेशमादित्यो वा इत्यादि वेदान्तप्रदेशमध्यापिता अर्थावबोधपर्यन्तमध्ययनं कारिता विद्वांसस्तदिति मन्त्रविदः तत्सवितुर्वरेण्यमिति गायत्रीमन्त्रविदो भवन्ति। किञ्च

तेषामध्यापितानामस्य गायत्रीमन्त्रस्य किं सविता सूर्यो वाच्यः किं सवितुर्वरेण्यो भवानिति वितर्कपदं विचारपदं न अयं विचार एव नोदेति आदित्यो वा इत्याद्यनुवाकानुसन्धानेनैवेश्वरस्य सूर्यान्तरात्मनिश्चये सति गायत्रीमन्त्रेऽपि तदन्तरात्मेश्वर एव प्रतिपाद्यत इति निश्चयो भवतीत्यर्थः ॥ ५९ ॥

गायत्रीमन्त्रपदार्थविचारेणापीश्वरस्यैव गायत्रीप्रतिपाद्यत्वं प्रतीयत इत्याह—

भास्वन्तमेष विषयीकुरुते न मन्त्र-
शशक्नोति वक्तुमयिदैवतमीश्वरं त्वाम्।
यस्मादयं त्वयि निरोहति भर्गशब्दः
प्रज्ञाप्रचोदकतया तदधीयसे त्वाम्॥ ६० ॥

एष तत्सवितुरिति मन्त्रो भास्वन्तं न विषयीकुरुते न प्रतिपादयति किंत्वधिदैवतमीश्वरं त्वां वक्तुं शक्नोति। तथा च आदित्यपुराणे श्रूयते। "ततो दर्भासने स्थित्वा गायत्री प्रजपेद्विजः। त्रैवर्णिकानां सर्वेषां गायत्रीपरमा गतिः। यद्गायत्र्याः परं तत्वं देवदेवो महेश्वरः। इति ज्ञात्वा जपेद्विद्वान्गायत्र्याः फलमश्नुते। यो मन्यते ऽन्यथयितुं गायत्रीं शिवरूपिणीम्। स पच्यते महाघोरे नरके कल्पसङ्ख्यया। पादाश्चत्वारो गायत्र्या देवाश्चत्वार एव ते। रविश्च विष्णुरुद्रेशाः पदानां देवताः क्रमात्। एवं ज्ञात्वा विधानेन गायत्रीं वेदमातरम्। जपेन्माहे-

श्वरीं ज्योतिर्नित्यमेव प्रकाशते"। इति। आदित्यपुराणे ऽपि विष्णोर्वचनम्। "गायत्रीवल्लभः प्रांशु"। इति। लैङ्गे ऽपि। "दिवाकरस्मृतस्तस्मात्कालस्तद्विद्भिरीश्वरः। चतुर्विधानां भूतानां प्रवर्तकनिवर्तकः। तस्यापि भगवान्रुद्रस्साक्षादेव प्रवर्तकः"। इति। तत्रहेतुमाह यस्मादिति यस्मात्कारणादयं भर्गशब्दः त्वयि निरोहति निरूढो भवति। नान्यत्र प्रयुज्यत इत्यर्थः। "हरस्मरहरो-भर्गः।" इत्यमरः। "भीमो भर्गः कृत्तिवासाः"। इति च। तथा च स्कान्दे भृङ्गिवचनम्। "शम्भो शङ्कर शान्त शाश्वत शिव स्थाणो भवोमापते भूतेश त्रिपुरान्तक त्रिणयन श्रीकण्ठ कालान्तक। शर्वोग्राभय भर्ग भीम जगतांनाथाव्यय श्रीनिधे रुद्रेशान महेश्वरेश्वर महादेवेश तुभ्यं नमः"। इति। पौलस्त्य-वचनम्। "शम्भो भर्ग भव त्रिणेत्र जगतां बन्धो ऽन्धकध्वंसक प्रालेयांशुकलावतंस मदनद्वेषिन् मृडानीपते। व्योमव्यापिवपुर्म-हेश यमिनामाद्यत्रिलोकीतनो भास्वद्विग्रह विग्रहार्तिशमन त्वं पाहि नस्सन्ततान्"। इति। तस्मात्कारणत्त्वं प्रज्ञाप्रचोदकतया-धर्माधर्मबुद्धिप्रेरकतया अधीयते। एष एव हि साधु कर्म कारयति एष एवासाधु कर्म कारयतीति श्रुतिष्वाम्नायसे॥ ६० ॥

ननु केचिदिमं मन्त्रं सवितृपरत्वेन व्याचक्षते। यस्स-विता नो ऽस्माकं सर्वेषां धर्मादिविषया धियो बुद्धीः प्रचोदया-त्प्रेरयेत् सवित्राभ्यनुज्ञातो हि सर्वं कर्म करोति। "सविता वै प्रसवानामीशः"। इति ब्राह्मणम्। तस्य देवस्य सवितुर्वरेण्यं वर-

णीयं यद्भर्गः पापानां भर्जनं तद्रूपं धीमहीति तच्छब्दो अध्याहर्तव्यः यत्सर्वेषां धियं प्रचोदयादिति तदित्यर्थः। तथा च तेषां वचनम्। "यो देवस्सवितास्माकं धियो धर्मादिगोचराः। प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे"। इत्यत आह—

सान्तो ऽयमन्तकरिपो यदि भर्गशब्दो
यत्तत्पदद्वयमनन्वयि लिङ्गभेदात्।
अन्वेषयेदुभयमन्यमभिन्नलिङ्ग-
मश्रूयमाणमसमञ्जस एष पक्षः॥ ६१॥

हे अन्तकरिपो ऽयं भर्गशब्दस्सान्तो यदि असुन्प्रत्ययान्तत्वेन सकारान्तश्चेद्यत्तत्पदद्वयं य इति तदिति पदद्वयं लिङ्गभेदात्पुल्लिङ्गनपुंसकलिङ्गभेदादनन्वयि परस्परान्वयरहितं सदस्मिन्मन्त्रे ऽश्रूयमाणमभिन्नलिङ्गं समानलिङ्गमुभयं विशेषणमन्यद्विशेष्यमन्वेषयेदाकाङ्क्षेत सम्बन्धयोग्यसमानलिङ्गपदाश्रवणात्साकांक्षमेव यत्तत्पदद्वयमवतिष्ठत इत्यर्थः। अत एष पक्षोऽसमञ्जसः। असमीचीनः भर्गशब्दस्य सकारान्तत्वाङ्गीकारेण सूर्यपरत्वेन व्याख्यानपक्षो ऽयुक्त इति भावः॥ ६१॥

ननु भर्गशब्दो ऽसुन्प्रत्ययान्तत्वेन सकारान्त एव भवतीति वक्तुं युक्तं ञ्नित्यादिर्नित्यम्। इत्याद्युदात्तो हि नित्स्वरस्तदन्ततायामेवोपपद्यत इत्यत आह—

शब्दस्मृतिर्ह्यसुनि वा घञि वा पदान्ते
युक्तं वदत्युभयथा स्वरमाद्युदात्तम्।
व्यत्यस्तकारकमवैमि पदं घञन्तम्
मैत्रायणश्रुतिपराहतसान्तभावम्॥ ६२॥

असुनि वा घञि वा पदान्ते सति शब्दस्मृतिः। ञ्नित्यादिर्नित्यम्। इत्यादि व्याकरणसूत्रमाद्युदात्तमुभयथा युक्तं वदति हि भर्गशब्दस्यासुन्नन्ततायामिव घञन्ततायामप्युदात्तसिद्धेः। ननु च भर्ज्यते संसारदुःखमनेनेति कर्तरि कारके घञ्नसिध्यति। "अकर्तरि च कारके संज्ञायाम्" इति हि तद्विधानादित्यत आह व्यत्यस्तेति व्यत्यस्तकारकं विपरीतकारकं मैत्रायण श्रुतिपराहतसान्तभावम्। "भर्गो देवस्य धीमहि सविता वै देवो यो ऽस्य भर्गाख्यस्ताच्चिन्तया" मीति मैत्रायणश्रुत्या भर्गाख्य इत्युपादानादकारान्तत्वमुक्तं भर्गशब्दस्य यदि सकारान्तत्वमभिप्रैष्यत् यदस्य गर्भ आख्यं तच्चिन्तयामीति वा वक्ष्यत्। अत एव पराकृतो निराकृतस्सान्तभावस्सकारान्तत्वं यस्य तत्पदं भर्गपदं घञन्तमवैमि मैत्रायणश्रुतिनिबन्धनेयैकव्यत्यासमङ्गीकृत्यापि सकारान्तत्वं परित्यज्य घञन्तमेवाङ्गीकर्तव्यमिति भावः॥

अस्याः मैत्रायणश्रुतेरर्थमाह—

मैत्रायणश्रुतिरसौ तदिति प्रकृत्य
भर्गं भवन्तमभिधाय विचिन्तनीयम्।

रुद्रस्य भर्गपदगोचरतां ब्रुवाणा
सान्तं प्रतिक्षिपति भर्गपदं पुरारे ॥ ६३ ॥

असौ मैत्रायणश्रुतिः तदिति गायत्रीमन्त्रं प्रकृत्य भर्गं भवन्तं विचिन्तयामीत्यनेन विचिन्तनीयमभिधाय को वा भर्गाख्य इत्याकांक्षायां "एष रुद्रो भर्गाख्यो ब्रह्मवादिनः"। इत्युपरितनवाक्योक्तस्य रुद्रस्य भर्गपदगोचरतां ब्रुवाणा भर्गशब्दं सान्तं प्रतिक्षिपति भर्गशब्दस्य सकारान्तत्वं निराचष्टे ॥ ६३ ॥

तलवकारिब्राह्मणेनापि भर्गशब्दस्य सान्तभावो निरस्त इत्यत आह—

सान्तं पदं तदपि नैव ददाति वक्तुं
यद्ब्राह्मणन्तलवकारिण आमनन्ति।
प्रश्नोत्तरक्रमनिरूपितपूर्वपादं
पादं द्वितीयमपि भर्गमयं ब्रवीति ॥ ६४ ॥

तलवकारिणः। "कस्सविता का वा सावित्री" इत्युपक्रम्य "तस्या एष प्रथमः पादः द्वितीयः पादो भर्गमयम्" इति यद्ब्राह्मणमामनन्ति तदपि भर्गपदं सान्तं वक्तुन्नैव ददाति। सकारान्तत्वेन वक्तुं न सहत इत्यर्थः। तत्र हेतुमाह प्रश्नोत्तरक्रमनिरूपितपूर्वपादम्। "कस्सविता का वा सावित्री" इति प्रश्नः "तस्य एष प्रथमः पादः इत्युत्तरं तत्क्रमेण निरूपितः प्रतिपादितः

पूर्वपादो यस्य तद्ब्राह्मणं अथ द्वितीयं पादं तस्या गायत्र्याः द्वितीयं पादंभर्गमयं ब्रवीति द्वितीयः पादो भर्गमय इति ब्रवीति। स यदि सान्तस्स्यात्तर्हि भर्गमय इति न स्यात् किंतु मनोमय इति वद्भर्गो मय इत्येव स्यादिति तात्पर्यं भर्गशब्दस्याकारान्तत्वं कूर्मपुराणे ऽप्युक्तम्। "प्रपद्ये तत्परं तत्वं वरेण्यं सवितुश्शिवम्। भर्गमग्निं परं ज्योतीरक्ष मां हव्यवाहन" इति। शैवपुराणे ऽपि "सौरे च बिम्बे च सुवर्णवर्णं भजन्ति यं वेदविदां वरिष्ठाः। वदन्ति तं काळगळं सदा तं स्कन्दं तु भर्गाख्यमहं भजामि"। इति ॥ ६४ ॥

एवं भर्गशब्दस्याकारान्तत्वं प्रतिपाद्य गायत्रीपदानामन्वयमाह—

भर्गः प्रचोदयति यो धियमस्मदीया-
न्तं धीमहीति घटना विनिमाय लिङ्गम्।
वाच्यस्य भर्ग भवतस्स्वपदाभिधानं
भर्गाख्यमित्यपि च साम्बवचोनुरोधः ॥ ६५ ॥

यो ऽस्मदीयां धियं प्रचोदयति तं धीमहीति तच्छब्दस्य नपुंसकलिङ्गं विनिमाय विपरिणामं कृत्वा घटना क्रियाकारकयोजना। तथा च याज्ञवल्क्यः। "देवस्य सवितुर्मध्ये यो भर्गो नो धियस्स्वयम्। प्रचोदयात्तं वरेण्यन्धीमहीत्यन्वयक्रम" इति॥ तथा च शातातपवाक्यम्। "धर्मादिगोचरा यो नो

धियो भर्गः प्रचोदयात्। देवस्य सवितुश्चापि वरेण्यं तमुपास्महे" इति। एवं प्रतिपादने सतीदमपि प्रयोजनद्वयं सम्भवतीत्याह। वाच्यस्येति हे भर्ग वाच्यस्य भर्गपदवाच्यस्य भवतः स्वपदाभिधानं कतमोवै भर्ग इति ब्रह्मवादिनो वदन्ति पापभञ्जनाद्ब्राह्मणानां जगद्भ्रमनाद्रुद्र एव भर्गो नान्य इत्याह। याज्ञ्यवल्क्य इति मैत्रायणश्रुत्युक्तप्रकारेण स्ववाचकभर्गशब्दस्याभिधानन्तद्भर्गाख्यं किमपि परमं धामेति साम्बस्तुतिवाक्यानुरोधश्चेति प्रयोजनद्वयम्॥ ६५॥

तदक्षरमिति मन्त्रोपनिषदप्ययमुमेवार्थं प्रतिपादयतीत्याह—

**त्वामेव मन्त्रोपनिषद्ब्रवीति**
**तदित्यृचो ऽस्याः प्रतिपाद्यमर्थम्।**
**तदक्षरन्तत्सवितुर्वरेण्यं**
**प्रज्ञा च तस्मात्प्रसृता पुराणी॥ ६६॥**

इति मन्त्रोपनिषच्छब्दैस्सवितृवरणीयत्वप्रज्ञाप्रचोदकत्वप्रतिपादकैः। शब्दैस्स्त्वामेव तदित्यृचः तदित्यस्या ऋचः प्रतिपाद्यमर्थं ब्रवीति। वृत्तभेदस्तु मन्त्रानुकरणार्थः॥ ६६॥

ननु भार्गवत्वेनास्या ऋचः कथं सावित्रीति व्यपदेशस्तत्राह—

**भार्गो ऽपि सन्सवितृशब्दसमन्वयेन**
**सावित्रतामपि विगाहत एव मन्त्रः।**

तत्तत्पदान्वयवशेन महेश मन्त्रां-
स्तद्देवतानपि हि मन्त्रविदः पठन्ति ॥ ६७ ॥

अयं तत्सवितुरिति मन्त्रो भार्गः भार्गो देवता अस्येत्यर्थः। "सास्यदेवता" इत्यण्। भर्गदेवताकस्सन्नपि सावित्रतां सवितृदेवताकत्वमपि विगाहत एव प्राप्नोत्येव हि यस्मात्कारणान्मन्त्रविदस्तत्तत्पदान्वयवशेन तत्तद्देवतावाचकपदसम्बन्धवशेन मन्त्रां स्तत्तद्देवताकानपि पठन्ति ॥ ६७ ॥

एकस्या एवर्चोनेकदेवतावाचकपदसम्बन्धवशेनानेकदेवताकत्वं ब्राह्मणोक्तं दर्शयति—

अप्यर्कदैवतवतीमृचमामनाम-
श्शब्देन विश्व इति शङ्कर वैश्वदेवीम्।
पित्र्याञ्च मर्त इति पुष्यपदेन पौष्णी-
मेतादृशानि कति नाम निदर्शनानि ॥ ६८ ॥

अर्कदैवतवतीं "विश्वोदैवस्य नेतु" रिति पंचस्वस्त्यात्रेयो नाम ऋषिः अनुष्टुप्छंदः विश्वे देवा देवता इति ऋग्विधाने विश्वेदेवस्येत्यस्या ऋचः विश्वेदेवदेवताकत्वमुक्तं तथापि मंत्रवाच्यात्र्यो देवतेति नैरुक्तवाक्यादर्कदेवताकत्वमिति अर्कदैवतवतीमपि सवितृदेवताकामपि "विश्वोदेवस्य नेतुर्मर्तो वुरीत सख्यं। विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे"। इति ऋचं विश्वपदेन वैश्वदेवीं विश्वेदेवदेवताकां मर्त इति पदेनपित्र्यां पितृदेवताकां

पुष्यपदेन पुष्यसे इति पदेन पौष्णीं पूषदेवताकामामनामः अ-धीमहे तथाच यजुर्वेदे ब्राह्मणवाक्यम्। "विश्वोदेवस्य नेतुरि-त्याह सावित्र्ये तेन मर्तो प्रणीत सख्यमित्याह पितृदेवत्ये तेन विश्वोराय इषुध्यतीत्याह वैश्वदेव्येतेनद्युम्नं वृणीत पुष्यसे इत्याह पौष्ण्ये तेन सा वा एषर्क्सर्वदेवत्येति। एतादृशानि निद-र्शनानि कति नाम। "नाम प्रकाशसंभाव्यक्रोधोपगमकुत्सने"। इत्यमरः कानि चित्संभाव्यानीत्यर्थः ॥ ६८ ॥

अनेनैव न्यायेन कल्पकारैरपि तत्तद्देवताकेषु कर्मसु तत्तत्पदावयवान्वयवशेनापि मंत्राविनियुज्यन्त इत्याह।

**एषा गतिश्श्रुतिगिरामिति निर्णयेन**
**तत्तद्गृहार्चनविधौ मुनयस्स्मरन्ति।**
**मन्त्रेण शङ्कर शनेश्शमुपक्रमेण**
**बुध्यस्वशब्दसहितेन बुधस्य पूजाम् ॥ ६९ ॥**

श्रुतिगिरां वेदवचसां एषा गतिः अयं न्यायः इति निर्ण-येन मुनयस्तत्तद्गृहार्चनविधौ शमुपक्रमेण शं इति शब्द उपक्रमः प्रारंभः यस्य तेन। "शन्नोदेविरभिष्टये"। इति मन्त्रेण शनेः शनैश्चरस्य बुध्यस्वशब्दसहितेन। "उद्बुध्यस्वाग्ने"। इतिमन्त्रेण बुधस्य पूजां स्मरन्ति। तथा च याज्ञवल्क्यः। "आकृष्णेन इदं देवा अग्निर्मूर्धा दिवः ककुत्। उद्बुध्यस्वेति चर्चो यथासं-

रुयं प्रकीर्तिताः। बृहस्पते अतियदर्यस्तद्देवाः स्तत्परा श्रुतिः। शन्नोदेवीस्तथा मन्त्राः केतुं कृण्वन्कयानचेति'' ॥ ६९ ॥

ईश्वरवाचकेषु बहुषु वैदिकेषु मन्त्रेषु सत्स्वपि गायत्र्या ईश्वरवाचकत्वप्रतिपादने त्रयीसारत्वं हेतुरित्याह ॥

**आम्नायमृग्यजुषसामविधं विचिंत्य**
**सारं समुद्धृतवता परमेष्ठिनापि।**
**मन्त्रस्त्रिपादयमदृष्टविधान्तरेण**
**दृष्टश्चराचरगुरो मनुना यथोक्तम् ॥ ७० ॥**

हे चराचरगुरो ऋग्यजुषसामविधं ऋग्यजुस्सामप्रकारं आम्नायं वेदं विचिंत्यादृष्टविधान्तरेणादृष्टप्रकारान्तरेण सारमुत्कृष्टभागं समुद्धृतवता परमेष्ठिनापि अपिरेवार्थे परमेष्ठिनैव त्रिपादयं मन्त्रो दृष्टः उक्तेऽर्थे मनुवचनसंमतिं दर्शयति। यथेति। यथोक्तं मनुना। "त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्यास्सावित्र्याः परमेष्ठी प्रजापतिः"। इति। अथर्वणस्याप्यत्रैवांतर्भावात्त्रिभ्य इत्युक्तम् ॥ ७० ॥

एवं पंचदशश्लोकैस्सोपोद्घातं महेशितुः। गायत्रीमन्त्रवाच्यत्वं लक्षणं सुनिरूपितम्। अथेशितुः क्रमप्राप्तं क्रतुशेषित्वलक्षणम्। श्लोकैर्द्वादशसंख्याकैः प्रतिपादयति स्फुटम् ॥

गृह्णातु काममनलस्सकलं हविस्ते
राज्ञो बलिं हरतु भागदुघः प्रजाभ्यः
पार्थेन शङ्कर निवेदितमंबुजाक्षे
नैशं हविस्फुटमदृश्यत पादयोस्ते ॥ ७१ ॥

अनलो अग्निः कामं सकलं हविर्गृह्णातु स्वीकरोतु तत्सलं सोमादिकं हविस्ते तव स्वमिति शेषः अत्र दृष्टान्तः राज्ञ इति भागदुघः भागं करं देग्धि गृह्णातीति भागदुघः शौल्क शालिकादिः। दुहः कप् घश्च। इति दुहः कप् घकारादेशश्च राज्ञो बलिं हरतु शौल्कशालिकादिगृहीतः करः राज्ञः एवमनलगृहीतं सोमादिकं सकलं हविस्तव स्वमित्यर्थः न हि परकीयं धनं गृह्णतः स्वं भवति गृह्णतापि स्वामिन एव समर्पणीयत्वात् अत्र किंचिदितिहासवचनं प्रमाणमाह पार्थेनेति हे शंकर पार्थेनार्जुनेनांबुजाक्षे पुरुषोत्तमे निवेदितं समर्पितं नैशं हविरुपहारस्ते पादयोस्फुटमदृश्यत। तथा च द्रोणपर्ववचनम्। "तश्चोपहारं सकलं नैशं नैमित्तमात्मनः। ददर्श त्र्यंभकाभ्याशे वासुदेवे निवेदितम्"। इति। अत्र वासुदेवस्य हविर्निवेदनाधिकरणत्वमुक्तं ईश्वरस्य संप्रदानमुक्तमिति। ननु महभारते पाण्डवानां कृष्णसहायत्वेन सर्वकार्यसिद्धेः कथं तस्य हविर्निवेदनाधिकरणत्वमिति चेन्न पाण्डवानां कृष्णस्य चेश्वरानुग्रहादेव सर्वकार्यसिद्धिः। भारते आश्वमेधिके पर्वणि श्रूयते "भीमसेनो नृपश्रेष्ठं

प्रांजलिर्वाक्यमब्रवीत्। रोचते मे महाबाहो यदिदं भाषितं मया। व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति। तत्प्राप्नुयामहे वित्तं धर्मादान्वीक्षितं प्रति। कृतमेव महाराज भवेदिति मतिर्मम। ते वयं प्रणिपातेन गिरीशस्य महत्मनः। तदानयामहे सर्वे तमभ्यर्च्य कपर्दिनम्। तं विभुं देवदेवेशं शूलपाणिं त्रिलोचनम्। अनादिनिधनं शंभुं नमस्यामो महेश्वरम्। तं विभुं देवदेवेशं तस्य चानुचरांस्तु तान्। प्रसादार्थमवाप्स्यामो मनोवाक्कायकर्मभिः। रक्षंति ये च तत्सर्वं किंकरा रौद्रदर्शनाः। ते च वश्या भविष्यंति प्रसन्ने वृषभध्वजे। स हि देवः प्रसन्नात्मा भक्तानां परमेश्वरः ददात्यमरतां वापि किं पुनः कांचनं प्रभुः। वनस्थस्य पुरा जिष्णोरस्त्रं पाशुपतं महत्। रौद्रं ब्रह्मशिरश्चादात्प्रसन्नः किं न दास्यति। वयं सर्वे च तद्भक्तास्सचास्माकं प्रसीदतु। तत्प्रसादाद्वयं राज्यं प्राप्ताः कौरवनन्दन। अभिमन्योर्वधे वृत्ते प्रतिज्ञाते अर्जुनेन वै। जयद्रथवधार्थाय स्वप्ने लोकगुरुर्निशि। समासाद्य तु गांधर्वमर्जुनस्सहकेशवः। ततः प्रभातां रजनीं फल्गुनस्याग्रतः प्रभुः। जघान सैन्यं शूलेन प्रत्यक्षं सव्यसाचिनः। कस्तां सेनां महाराज मनसापि प्रधर्षयेत्। द्रोणकर्णमुखैर्गुप्तां महेष्वासैः प्रहारिभिः। ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात्। तस्यैव च प्रसादेन निहताश्शत्रवस्तव। अश्वमेधस्य संसिद्धिं स तु संपादयिष्यति। श्रुत्वैवं ब्रुवतस्तस्य वाक्यं भीमस्य पार्थिव। प्रीतो धर्मात्मजो राजा सभु-

वातीव भारत । अर्जुनप्रमुखाश्चैव तथेत्येवाब्रुवन्मुदा" । आनु-शासनिके पर्वणि । "शतक्रतुं चाभिवीक्ष्य स्वयं मामाह शंकरः। विद्मः कृष्ण परां भक्तिमस्मासु तव शत्रुहन् । क्रियतामात्मनश्श्रेयः प्रीतिर्हि परमा त्वयि । वृणीष्वाथ वरान् कृष्ण दातास्मि तव सत्तम ॥ ब्रूहि यादवशार्दूल यानिहेच्छसि दुर्लभान्" । इति । कृष्णप्रसादस्तु परमेश्वरस्य प्रसादं भवति । तदुक्तं द्रोणपर्वणि । "तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम् । दृष्टवानस्मि भद्रन्ते केशवस्य प्रसादजम् ।" महाभारते तु परमेश्वर एव प्रतिपाद्यते । तदुक्तम् । शान्तिपर्वणि । "यं विष्णुरिन्द्रश्शम्भुश्च ब्रह्मालोक-पितामहः । स्तुवन्ति विविधैस्तोत्रैर्देवदेवं महेश्वरम् । तमर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते ।" इति ब्रह्मविष्ण्वादिभिः परमेश्वर एव सर्वत्रोपास्यत्वेन प्रतिपाद्यते । महाभारते । "आद्यं पुरुषमी-शानम्" । इत्युपक्रमानुरोधेनोपसंहारोऽपीश्वरविषय इति समी-चीनम् । "सत्वं वहति शुद्धात्मा परं नारायणं प्रभुम् । प्रभुर्व-हति शुद्धात्मा परमात्मानमात्मना" । इत्यादि शान्तिपर्वणि नारायणान्तर्यामित्वेन परमेश्वरस्य प्रतिपादनान्नारायणद्वारा पर-मेश्वर एव प्रतिपाद्यत इति समीचीनम् । ननु । "इन्द्राय स्वाहा" । "अग्नये स्वाहा ।" इत्यादाविन्द्रादीनां हविस्संप्र-दानत्वश्रवणात् । "अवीव्रतयादि द्रव्येषु अद्धीन्द्रं पिब च प्रस्थितस्याग्निरिदं हविरजुषते" त्यादौ हविर्भोक्तृत्व श्रवणात्तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयतीत्यादौ फलदातृत्व श्रवणाच्च

कथं सकलहविषामीश्वरशेषित्वमिति चेन्मैवं नेन्द्रादिशब्दैरिन्द्रादयो यज्ञकर्मणि संप्रदानभूता उच्यन्ते किंत्वधिष्ठातृमहेश्वरसहिता एव यथा देवदत्तादिशब्दैर्नशरीरमात्रं किंतु शरीरविशिष्टात्मान उच्यन्ते एवमधिष्ठातृमहेश्वरसहिता एवेन्द्रादय इन्द्रादिशब्दैरुच्यन्ते ततश्चाधिष्ठाता महेश्वर एव यज्ञेन तृप्तस्संस्तानपीन्द्रादींस्तर्पयति यज्ञकर्तॄंश्च स्वर्गादिफलेन संयोजयति यथा माता गर्भपोषणायान्यदत्तेन दौहृदान्नपानादिना स्वयमुपभुक्तेन तृप्ता सती स्वजठरगतमपत्यं तर्पयति दौहृदान्नपानादेः प्रदातारं च प्रत्युपकारेण फलेन योजयति तद्वत्। तथा च कूर्मपुराणवचनम्। "अहं हि सर्वहविषां भोक्ता चैव फलप्रदः। सर्वदेवतनुर्भूत्वा सर्वात्मा सर्वसंस्थितः"। इति। महाभारते ऽपि। "सर्वेषां देवतानां च धारयत्यवपुर्वपुः"। इति। तत्रैव नियोगाध्याये। "हव्यं वहति देवानां कव्यं कव्याशिनामपि। पाकञ्चकुरुते वह्निस्सो ऽपि मच्छक्तिचोदितः। सोऽप्यशेषजगच्छास्ता शक्रस्सर्वामरेश्वरः। यज्वनां फलदो देवो देवदेवनियोगतः"। इति। ईश्वरस्येन्द्रादिसर्वशब्दवाच्यत्वं वेदे ऽप्युक्तम्। "नाम नामैव नाम मे"। इति प्रसिद्धं। सर्वन्नाम मे नाम भवति। हरिवंशे ऽप्युक्तम्। "यानि ते वासुदेवादिनामानि च महान्ति च। तान्येव मम नामानि नात्र कार्या विचारणा"। इति आश्वलायनेनाप्युक्तम्। "सर्वाणि हवा एतस्य नामधेयानिसर्वास्सेनास्सर्वाण्युच्चयणानि।" इति। यावन्ति लोके नामधेयानि सन्ति तानि सर्वाण्यस्यैव नाम

धेयानि यावन्तो लोके शब्दास्सन्ति तैस्सर्वैरयमेव वाच्य इत्यर्थः। लोके यावन्त्यस्सेनास्सन्ति तास्सर्वा अस्यैव सेनाः न ह्यन्यस्याल्पभाग्यस्य सेनास्सन्ति। अनेन राजादय इन्द्रादयश्च रुद्रांशभूता इत्युक्तं यावन्ति लोके उच्छ्रयणानि उत्कृष्टानि ऐश्वर्यवत्तया दृष्टतया तपस्तप्तृतया चान्येन वा तानि सर्वाण्यस्यैवांशभूतानि न ह्यन्यस्योत्कृष्टवत्वसंभवः अथवा उच्छ्रयणानि सर्वतो दीर्घाणि पर्वतादीनि तेष्वयं वसतीति सर्वशब्दवाच्यत्वं वायवीयसंहितायां श्रूयते। "शब्दजातमशेषं तु धत्ते शंभुमनोरमा। अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः। यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता। सा सा सर्वेश्वरी देवी स स सर्वो महेश्वरः"। इति। ॥७१॥

प्रतिज्ञातं सोमादिहविषामीश्वरशेषित्वमुपपादयति—

सोमं त्वदर्थमनुशुश्रुम सूयमान
माल्भनं पशुपते नियतं पशूनाम्।
गव्यञ्च ते गवि सदेव तदध्वरेषु
चण्डेश्वरेण सह नाकसदां विवादः ॥७२॥

सूयमानमभिषूयमाणं सोमं त्वदर्थमनुशुश्रुम। तत्र श्रुतिः "अयं सोमं कपर्दिने घृतं न पवते मधु"। इति। हे पशुपते पशूनामालम्भनं नियतं त्वदर्थमनुशुश्रुम। तत्र श्रुतिः। "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये अनुमन्यस्व

सुयजा यजामजुष्टं देवानामिदमस्तु हव्यम्"। इति। हे पशुपते त्वत्स्वामिकं पशुं सुकृतस्य यज्ञस्य मध्ये बध्नामि अनुमन्यस्वेत्यन्वयः। पशुपते पशवो विरूपाः रौद्रा वै पशवो रुद्रा देवपशून्निर्याच्यात्मने कर्म कुरुते। इत्यादि। गवि सद्गवि विद्यमानपयोदध्याज्यलक्षणं गव्यं हविश्च ते त्वदीयमनुशुश्रुम। तत्र श्रुतिः। "रौद्रं गवी"ति तस्मात्कारणादध्वरेषु यागेषु चण्डेश्वरेण सह नाकसदामिन्द्रादीनां विवादः ॥७२॥

सकलहविषामीश्वरसम्बन्धस्योत्पत्तिसिद्धत्वात्वदनुज्ञयैव सर्वदेवानां हविर्गृहणमित्याह—

**उत्पत्तितश्शिव गृहीतसमन्वयास्ते**
**सोमः पशुर्गवि च सन्ति हवींषितानि।**
**देवाः पशौ हविषि भागमनुज्ञाया ते**
**गृह्णन्ति तद्वदितरेष्वपि कल्पनीयम् ॥ ७३ ॥**

हे शिव सोमः पशुर्गवि च हवींषि पयोघृतदधिलक्षणानि सन्ति ते पदार्थाः उत्पत्तित उत्पत्तिमारभ्य ग्रहीतसमन्वयास्स्वीकृतभवत्सम्बन्धाः अतो देवाः पशौ वपादिलक्षणे हविषि भागन्ते अनुज्ञया गृह्णन्ति। तत्र श्रुतिः। "इमं पशुं पशुपते ते अद्य"। इति। तद्वदितरेष्वपि हविष्षु महेश्वरसम्बन्धविशेषादीश्वरानुज्ञयैव देवा गृह्णन्तीति कल्पनीयं ननु मीमांसकमते शब्दव्यतिरिक्तदेवताया अभावात्कथमीश्वरानुमतिरिति शब्दव्यतिरि-

क्तदेवताङ्गीकारे युगपदनेकदेशेषु यज्ञेष्वारम्भमाणेषु सत्सु तत्र तत्र सन्निधानाभावात्कथमेवमिति चेन्न देवतानामणिमादिगुणविशिष्टत्वेनाकाशवद्युगपत्सर्वत्रावस्थानसम्भवात्। तथा च श्रुतयः। "सर्वतः सशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी च भगवान्तस्मात्सर्वगतश्शिवः। सर्वतः पाणिपादोऽयं सर्वतोऽक्षिशिरोमुखः। सर्वतश्श्रुतिमान्लोके सर्वमाविश्य तिष्ठति। सर्वेन्द्रियगुणावासस्सर्वेन्द्रियविवर्जितः। सर्वस्य प्रभुरीशानस्सर्वस्य प्रभुरव्ययः"। इति। शब्दव्यतिरिक्तार्थानङ्गीकारे घटशब्द एव जलादिहरणादिकं कुर्यात् चन्द्रशब्द एव चन्द्रकार्यं कुर्यात् लोके तथा नाङ्गीक्रियते वेद एवाङ्गीक्रियत इति चेन्न। "अथातो धर्मजिज्ञासा"। इति। वेदवाक्येष्वर्थविचार एव नोपपद्यते शब्दव्यतिरिक्तार्थाभावात् देवताप्रतिपादकवाक्यव्यतिरिक्तवाक्येषु शब्दार्थोऽङ्गीक्रियत इति चेन्न देवताप्रतिपादकवाक्ये शब्दव्यतिरिक्तदेवतार्थानङ्गीकारे नियामकं वक्तव्यं देवताया अनुपलम्भ एव नियामक इति चेन्न स्वर्गादयोऽप्यतथा तन्मिथ्यात्वे तदर्थिनां प्रवृत्तौ विधानानर्थ्यप्रसङ्ग इति चेदिहापि तदुपासनविधानानर्थ वाक्यप्रसङ्ग इति तुल्यम् ॥७३॥

"इमं पशुं पशुपते ते ऽद्ये" त्युक्तत्वाच्छ्रुतौ पशावीश्वरानुज्ञया भाव्यमितरत्र कल्पनायां किं मूलमित्याशङ्क्य सर्वकर्मस्वीश्वरानुज्ञाविधायकः प्रपदमन्त्र इत्याह—

कर्मैकमेव न परं पशुबन्धनन्ते
कर्तव्यमाहुरुपलभ्य तवाभ्यनुज्ञाम्।
सर्वेषु कर्मसु भवत्प्रसवेन पुंसा-
मारम्भणं प्रपदमन्त्रविदो गृणन्ति ॥ ७४ ॥

न परं पशुबन्धनमेकमेव कर्म ते तवाभ्यनुज्ञामुपलभ्य कर्तव्यमाहुः किन्तु सर्वेषु कर्मसु पुंसामारम्भणं भवत्प्रसवेन भवदनुज्ञया कर्तव्यं प्रपदमन्त्रविदोग्रणन्ति शंसन्ति सर्वकर्मारम्भजप्यः प्रपदाख्यो मन्त्रस्सामगैराम्नायन्ते। "तपश्च तेजश्च"। इत्युपक्रम्य। "ब्रह्मणः पुत्राय नमः"। इत्यन्तं तत्र। "विरूपाक्षोऽसि"। इति प्रस्तुत्य। "त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे समृध्यतां तन्म उपपद्यताम्" इति ॥ ७४ ॥

"अयं सोमः कपर्दिन" इति श्रुत्या सोमस्येश्वरसम्बन्ध उत्पत्तिसिद्ध इत्युक्तं तस्य होमावस्थायामपीश्वरसम्बन्धोऽस्तीत्याह—

सङ्कल्पतःप्रभृति यज्ञतनुं विभज्य
देवान्प्रजापतिमुखान्प्रति दर्शयन्तः।
सोमाहुतिं हुतवहार्चिषि हूयमाना-
मध्वर्यवस्तव गृणन्ति गिरीश भागम् ॥ ७५ ॥

अग्निष्टोमेन यक्ष्ये। इति सङ्कल्पादारभ्य यज्ञतनुं यागदेहं विभज्य विभक्तं कृत्वा वाक्यैः प्रजापतिमुखान्देवान्प्रति

दर्शयन्तोऽध्वर्यवः यजुर्वेदविदः हुतवहार्चिषि हूयमानां सोमाहुतिं तव भागं गृणन्ति प्रजापतिर्नमसान्धोच्छते इति यज्ञतनवस्समाम्नायन्ते तत्र रुद्र आहुत इति श्रुत्या हूयमानावस्थस्य सोमस्येश्वरतादात्म्यप्रतिपादनात्सोमस्य रौद्रत्वमुक्तमिति भावः ॥ ७५ ॥

एवं याज्ञियानां हविषामीश्वरशेषित्वमुपपाद्य यज्ञावशिष्टस्यापीश्वरशेषित्वमाह—

**सर्वं धनं धनपतेरुपभुक्तशिष्टं**
**यद्देवतातिथिसमाश्रितभृत्यवर्गैः ।**
**यज्ञेश यज्ञपरिशिष्टमपि त्वदीय-**
**मन्धिग्रहव्यतिकरे भवता यथोक्तम् ॥ ७६ ॥**

देवतातिथिसमाश्रितभृत्यवर्गैरुपभुक्तं शिष्टं यत्सर्वं धनं यथा धनपतेस्स्वं तथा हे यज्ञेश यज्ञपरिशिष्टमपि धनं त्वदीयं मन्धिग्रहव्यतिकरे मन्धिग्रहवृत्तान्ते यथोक्तं भवता तथा च यजुर्वेदे ईश्वरवाक्यरूपं वेदवाक्यम् "मह्यमिमानित्यब्रवीन्नवैतस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै त" दिति यद्धीयते विद्यते तदित्यर्थः । बह्वृचब्राह्मणे ऽपि । "तान्वा एष देवेभ्यवदतं मम वा इदं मम वै वास्तुहम्" । इति । अस्यार्थः तानेव सर्वान्पशूनभिलक्ष्य एव रुद्रो देव इदं सर्वं मम वै ममैवेत्यब्रवीत् तत्रोपपत्तिमाह वास्तुहमिति वास्तौ यज्ञभूमौ हीनं विद्यमानं द्रव्यं तत्सर्वं मम वै ममैव । इति । तस्मात्परमेश्वर ए-

वाध्वरस्य राजा तदविज्ञाय यजतो दक्षप्रजापतेर्यज्ञध्वंसशिरश्छे-
दश्च जातः। तथा च शैवे वायवीयसंहितायाम्। "मन्त्रा ऊचु-
स्सुरा यूयन्तमोपहतचेतसः। येन प्रथमभागार्हं न यजध्वं महे-
श्वरम्। किमेभिरमरैरन्यैः पूजितैरध्वरे फलम्। राजा चेदध्वरस्यां-
स्य न रुद्रः पूज्यते त्वया। ब्रह्मविष्णुमहेन्द्राणां स्रष्टायं प्रभु-
रव्ययः। ब्रह्मादयः पिशाचान्ताः यस्य किंकरवादिनः। प्रकृती-
नां परस्यैव पुरुषस्य च यः पतिः। चिन्त्यते योगविद्भिर्मुनि-
भिस्तत्वदर्शिभिः। अक्षरं परमं ब्रह्मा सच्चासदसच्च यः। अना-
दिमध्यनिधनमप्रतर्क्यं सनातनम्। यस्स्रष्टा चैव संहर्ता भर्ता च
परमेश्वरः। तस्मादन्यन्न पश्यामश्शंकरान्नान्यमध्वरे। अहो
विधिविपर्यासस्त्वश्वमेधो ऽयमध्वरः। यजमानस्स्वयं दक्षो ब्रह्म-
पुत्रः प्रजापतिः। धर्मादयस्सदस्याश्च रक्षिता गरुडध्वजः। भा-
गांश्च प्रतिगृह्णन्ति साक्षादिन्द्रादयस्सुराः। तथापि यजमानस्य
सयज्ञस्य सऋत्विजः। सद्य एव शिरश्छेदस्साधु संपद्यते फलम्।
तस्मान्नावेदनिर्दिष्टन्न चेश्वरबहिष्कृतम्। नासत्परिगृहीतञ्च कर्म
कुर्यात्कदाचन। कृत्वा च सुमहत्पुण्यमिष्ट्वा च विविधैर्मखैः। न
तत्फलमवाप्नोति भक्तिहीनो यदीश्वरे। कृत्वा च सुमहत्पापं
भक्त्या यजति यश्शिवम्। मुच्यते पातकैस्सर्वैर्नात्र कार्या वि-
चारणा। बहुनात्र किमुक्तेन वृथा दानं वृथा तपः। वृथा यज्ञो
वृथा होमो शिवनिन्दारतस्य तु"। इति। आदित्यपुराणेऽपि।
"ब्रह्मणा विष्णुना सार्द्धमाहूतस्तेन धीमता। देवांश्च सर्वान्भा-

गार्थमागतान्पद्मसम्भवः। दृष्ट्वा शिवेन रहितं दक्षं प्रत्येवमब्रवीत्। ब्रह्मा। अहो दक्ष महामूढ दुर्बुद्धे किं कृतं त्वया। देवास्सर्वे समाहूताश्शङ्करेण विना कथम्। अन्तर्यामी स विश्वेशस्सर्वेषामेव देहिनाम्। भोक्ता हि सर्वयज्ञानां शङ्करः परमार्थतः। एते च मुनयः किं वा तत्र साहाय्यकारिणः। न जानन्ति परं भावं महादेवस्य शूलिनः। एते च देवाश्शक्राद्या आगता यज्ञभागिनः। तन्मायामोहितास्सर्वे न जानन्ति पिनाकिनम्। यस्य पादरजस्स्पर्शाद्ब्रह्मत्वं प्राप्तवानहम्। शार्ङ्गिणापि तथा मूर्ध्ना धार्यते कश्शिवात्परः। यस्य वामाङ्गजो विष्णुर्दक्षिणाङ्गभवो ह्यहम्। यस्याज्ञयाखिलं विश्वं सूर्यो भ्राम्यति सर्वदा। चन्द्रश्च तारकाश्चैव ग्रहाश्च भुवनानि च। धर्माधर्मव्यवस्था च वर्णाश्चैवाश्रमाणि च। तिष्ठन्ति शासने यस्य देवदेवस्य शूलिनः। सा च शक्तिः परा गौरी स्वेच्छाविग्रहधारिणी। तव पुत्रीति दुर्बुद्धे मन्यसे तमसा वृतः। कस्तां जानाति विश्वेशीमीश्वरार्द्धशरीरिणी। अहं नाद्यापि जानामि शक्रादीनान्तु का कथा। स्वेच्छाविग्रहधारिण्या गौर्या सह पिनाकधृक्। भ्रामयन्त्यखिलं विश्वमिति सत्यं न संशयः। स एव बध्नाति पशूनस्मदादीन्सदाशिवः। संसारमोचको देवः पशूनान्य इति श्रुतिः। नामसङ्कीर्तनादस्य भिद्यते पापपञ्जरम्। कथं न पूज्यते देवस्त्वया दक्ष सुदुर्मते। शम्भोरवज्ञा यत्रास्ते स्थातव्यं नैव सूरिभिः। इत्युक्त्वा प्रययौ ब्रह्मा स्तूयमानो महर्षिभिः। सूतः। गते

चतुर्मुखे देवे सर्वलोकपितामहे। दधीचो ऽथाब्रवीद्दक्षं मुनीनामग्रणीस्स्वयम्। दधीचः। कथं देवादिदेवेशः कर्मसाक्षी सनातनः। विश्वेश्वरो महादेवस्त्वया दक्ष न पूज्यते। वाचकः प्रणवो यस्य ज्ञानमूर्तेरुमापतेः। अनुग्रहं विना तस्य कस्तं जानाति शूलिनम्। एक एवेति यो रुद्रस्सर्ववेदेषु गीयते। तस्य प्रसादलेशेन मुक्तिर्भवति शाङ्करी। प्रसङ्गात्कौतुकाल्लोभाद्भयादज्ञानतो ऽपि वा। शिव इत्युच्चरन्मर्त्यस्सर्वपापैः प्रमुच्यते। अहो दक्ष तवाज्ञानं तव नाशस्य कारणम्। केनापि हेतुना जातमिति मे चातिनिश्चयम्। उमया सहितो देवस्सोम इत्युच्यते बुधैः। स एव कारणं नान्यो विष्णोरपि च हि श्रुतिः। यज्ञस्य पालको विष्णुरितीदं निश्चितं त्वया। भविष्यत्यन्यथैवाशु पश्यतः कमलापतेः। एते च ब्राह्मणास्सर्वे ये द्विषन्ति महेश्वरम्। भवन्तु वेदबाह्यास्ते तमोपहतचेतसः। पाषण्डाचारनिरतास्सर्वे निरयगामिनः। कलौ युगे तु संप्राप्ते दरिद्राश्शूद्रयाचकाः"। इति। ब्रह्माण्डपुराणे उत्तरभागे हयग्रीवागस्त्यसंवादे "चक्रमुद्यम्य हस्तेन चक्रपाणिस्समुत्थितः। आरूढगरुडः पक्षविक्षेपक्षिप्तसागरः। दिव्यास्त्रशतवर्षेण वीरभद्रमवाकिरम्। वीरभद्रश्च कोपेन स्यन्दने महति स्थितः। अस्त्रज्वालाकलापेन दहन्निव तमभ्यथात्। तयोरन्योन्यमतुलं प्रकंपितजगत्त्रयः। सङ्ग्रामसुमहानासीन्मत्तयोरिव हस्तिनोः। रोषाट्टहासनिनदैः पूरयन्तो दिशो दश। दिव्यास्त्राणि विमुञ्चन्तौ भर्त्सयन्तौ परस्परम्। हस्तलाघवमत्यर्थं सूचयन्तौ

पराक्रमैः। चक्रतुस्समरं घोरं चक्रपाणि गणेश्वरौ। तयोरुद्वीक्ष्य संरम्भं वीरभद्रे जयं पुनः। पद्मयोनिर्विनिश्चित्य तस्य सारथितामगात्। वीरभद्रस्य तं कोपं चतुरश्चतुराननः। निजसारथ्यकृन्येन प्रममार्ज मुहुर्मुहुः। सूततामाकलय्यास्य सुप्रीतः पद्मजन्मनः। वीरभद्रश्चक्रभृता युद्धमद्भुतमातनोत्। पिनाकशार्ङ्गनिष्ठ्यूताः प्रचण्डरवकारिणः। विश्वं प्रोर्णुनुवुः शश्वद्विपाठागाढरंहसः। शरैरजेयमालोक्य वीरभद्रं जनार्दनः। तत्प्राक्षिपत्सहस्रारं चक्रं लोकभयङ्करम्। घूर्णमाननभश्चक्रं तदालोक्य सुदर्शनम्। व्यात्तेन निजवक्त्रेण वीरभद्रस्समागिलत्। नष्टे चक्रे वीरभद्रं बभाषे गरुडध्वजः। वीरभद्र महावीर स्थाने तव पराक्रमः। स्थाने त्वया कृता शिक्षा दक्षस्यास्य दुरात्मनः। साक्षान्महेश्वरस्यास्य भूतोऽपि भुवनेशितुः। तव शौर्यं महाघोरं सोढुं लोके क ईश्वरः। अप्रसक्तनिपातं यन्ममचक्रं गिरिष्वपि। वज्रादपि महाभीमं तत्त्वया गिलितं हठात्। ततो दुरात्मा दक्षोऽयं न केनाप्यत्र रक्ष्यते। अहमीदृग्दशौ जातः कस्तस्यान्योऽभिरक्षकः। तस्मादिमं शिवद्रोहं संपूर्णबहुपातकम्। देवीद्रोहेण चात्यन्तपापिष्ठं जहि दुर्जयम्। कालान्तरे महेशस्य कृत्वा च बहुधा तपः। अहं प्राप्स्यामि मच्चक्रं त्वद्गुरोः परमेश्वरात्। कूर्मपुराणेऽपि। "इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः। गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः। प्रस्तोत्रा च कृतस्तोत्रा ह्यश्वश्चैव गणेश्वराः। ग्रहीत्वा भीषणा-

स्सर्वे गङ्गास्रोतसि चिक्षिपुः। वीरभद्रोऽपि दीप्तात्मा शक्रस्यो- द्यच्छतः करम्। व्यष्टम्भयत दीनात्मा तथान्येषां दिवौकसाम्। भगस्य नेत्रे चोत्पाट्य करं जाग्रेण लीलया। जघान मूर्ध्नि पादेन मुनीनपि मुनीश्वराः। तथा विष्णुं सगरुडं समायान्तं महाबलः। विव्याध निशितैर्बाणैस्तम्भयित्वा सुदर्शनम्। समा- लोक्य महाबाहूं निर्गम्य गरुडो गणम्। जघान पक्षैस्सहसा ननादाम्बुनिधिर्यथा। ततस्सहस्रशो भद्रस्ससर्ज गरुडाह्वयात्। वैनतेयादभ्यधिकान्गरुडं ते प्रदुद्रुवः। तान्दृष्ट्वा गरुडो धीमा- न्पलायत महाजवः। विसर्ज्य माधवं वेगी तदद्भुतमिवाभवत्। अन्तर्हिते वैनतेये भगवान्पद्मसम्भवः। आगत्य वारयामास वीरभद्रश्च केशवम्"। इति। तथा च ब्रह्माण्डपुराणे श्रूयते। "स च प्राचेतसः काले पूर्ववैरमनुस्मरन्। अकरोद्यज्ञमिद्धार्थे- शिवन्निन्दन्सुविस्तरम्। हरिणा सर्वदेवैश्च मुनिभिश्च महर्षिभिः। दृष्ट्वा देवगणं सर्वं शङ्करेण विना कृतम्। दधीचो नाम देवर्षिः प्राचेतसमथाब्रवीत्। ब्रह्मादयः पिशाचान्ता यज्ञस्य वशवर्तिनः। स नेज्यते कथं रुद्रस्तेन नाथास्तवैष्यति। दक्षः। न तस्य विहिता भागा यज्ञोष्विति वचोऽवदत्। दधीचः प्राह तं भूयः पुरस्तेषां हि शृण्वताम्। यतः प्रवृत्तिर्विश्वस्य स हि स्यात्पर- मेश्वरः॥ स पूज्यते सर्वयज्ञैर्विदित्वा किल शङ्करः। दक्षः। न स रुद्रस्त्विमे प्राप्ता रुद्रा एकादशामराः॥ इत्युवाच तदा दक्ष- स्त्वन्तर्द्धिं सहसा गतः। हिरण्यगर्भो भगवान्विष्णुना कृतल-

क्षणम्। प्रवर्तयामास मखं दधीचः पुनरब्रवीत्। अपूज्यपूजने चैव पूज्यानाञ्चावपूजने। अयशो महदाप्नोति सद्यस्तत्पापजं फलम्। असत्परिग्रहो यत्र सताञ्चैवावमानता। दण्डो देवकृतस्तत्र सद्यः पतति दारुणः। तत्र स्थितान्द्विजानाह दक्षसाहाय्यकारिणः। यस्माद्बहिष्कृतो देवो भवद्भिः परमेश्वरः। भविष्यथ त्रयीबाह्याश्शिवद्रोहात्कुशास्त्रिणः। शशापेत्यादि बहुशः पार्वती शिवमब्रवीत्। देवी। गङ्गाद्वारे ऽधुना देव भवद्रोहो महेश्वरः। दक्षो यज्ञेन यजते पिता मे पूर्वजन्मनि। विनिन्द्य भवतो भावमात्मभूतं सदाशिवम्। कुर्वन्ति मुनयस्साह्यं सनारायणकास्सुराः। विनाशयाशु तद्यज्ञं वरमेतदहं वृणे। एवं विज्ञापितः प्रीतिस्तव चेत्संहरामि तम्। इत्युक्त्वा सो ऽसृजद्देवः भवद्रोही महेश्वरः। सहस्रबाहुं संक्रुद्धं सहस्राक्षं महाभुजम्। दंष्ट्या कराळवदनं शङ्खचक्रगदाधरम्। दण्डहस्तं महारौद्रं शार्ङ्गिणं भूतिभूषणम्। वीरभद्र इति ख्यातं देवदेवसमत्विषम्। स जातमात्रो देवेशमुपतस्थे कृताञ्जलिः। तमाह दक्षं तद्यज्ञं विनाशय गणैः क्षणात्। स तथेति जगामाशु गणैर्बलदर्पितैः। मन्युना चोमया सार्द्धं भद्रकाळी महेश्वरी। अन्ये सहस्रशो रुद्रा रोमजाश्च ययुस्तदा। देवाङ्गनासहस्राढ्यं वेदनादविनादितम्। गङ्गाद्वारे गणाध्यक्षा विविशुः परमाद्भुतम्। दक्षमाह क्व मे भागा न दास्यसि हि दास्यसि। वेदास्सन्तीति ते ब्रूयुस्तं मत्तो न शृणोषि किम्। दधीचवचनं तद्यद्यस्य वैनाशयाम्यहम्। इत्यु-

स्सर्वे गङ्गास्रोतसि चिक्षिपुः । वीरभद्रोऽपि दीप्तात्मा शक्रस्योद्यच्छतः करम् । व्यष्टम्भयत दीनात्मा तथान्येषां दिवौकसाम् । भगस्य नेत्रे चोत्पाट्य करं जाग्रेण लीलया । जघान मूर्ध्नि पादेन मुनीनपि मुनीश्वराः । तथा विष्णुं सगरुडं समायान्तं महाबलः । विव्याथ निशितैर्बाणैस्तम्भयित्वा सुदर्शनम् । समालोक्य महाबाहूं निर्गम्य गरुडो गणम् । जघान पक्षैस्सहसा ननादाम्बुनिधिर्यथा । ततस्सहस्रशो भद्रस्ससर्ज गरुडाह्वयात् । वैनतेयादभ्यधिकान्गरुडं ते प्रदुद्रुवः । तान्दृष्ट्वा गरुडो धीमान्पलायत महाजवः । विसर्ज्य माधवं वेगी तदद्भुतमिवाभवत् । अन्तर्हिते वैनतेये भगवान्पद्मसम्भवः । आगत्य वारयामास वीरभद्रश्च केशवम्"। इति । तथा च ब्रह्माण्डपुराणे श्रूयते । "स च प्राचेतसः काले पूर्ववैरमनुस्मरन् । अकरोद्यज्ञमिद्राद्यैशिवन्निन्दन्सुविस्तरम् । हरिणा सर्वदेवैश्च मुनिभिश्च महर्षिभिः। दृष्ट्वा देवगणं सर्व शङ्करेण विना कृतम् । दधीचो नाम देवर्षिः प्राचेतसमथाब्रवीत् । ब्रह्मादयः पिशाचान्ता यज्ञस्य वशवर्तिनः। स नेज्यते कथं रुद्रस्तेन नाथास्तवैष्यति । दक्षः । न तस्य विहिता भागा यज्ञोष्विति वचोऽवदत् । दधीचः प्राह तं भूयः पुरस्तेषां हि शृण्वताम् । यतः प्रवृत्तिर्विश्वस्य स हि स्यात्परमेश्वरः । स पूज्यते सर्वयज्ञैर्विदित्वा किल शङ्करः । दक्षः । न स रुद्रस्त्विमे प्राप्ता रुद्रा एकादशामराः। । इत्युवाच तदा दक्षस्त्वन्तर्द्धि सहसा गतः । हिरण्यगर्भो भगवान्विष्णुना कृतल-

क्षणम्। प्रवर्तयामास मखं दधीचः पुनरब्रवीत्। अपूज्यपूजने चैव पूज्यानाञ्चावपूजने। अयशो महदाप्नोति सद्यस्तत्पापजं फलम्। असत्परिग्रहो यत्र सताञ्चैवावमानता। दण्डो देवकृतस्तत्र सद्यः पतति दारुणः। तत्र स्थितान्द्विजानाह दक्षसाहाय्यकारिणः। यस्माद्बहिष्कृतो देवो भवद्भिः परमेश्वरः। भविष्यथ त्रयीबाह्याश्शिवद्रोहात्कुशास्त्रिणः। शशापेत्यादि बहुशः पार्वती शिवमब्रवीत्। देवी। गङ्गाद्वारे ऽधुना देव भवद्रोहो महेश्वरः। दक्षो यज्ञेन यजते पिता मे पूर्वजन्मनि। विनिन्द्य भवतो भावमात्मभूतं सदाशिवम्। कुर्वन्ति मुनयस्साह्यं सनारायणकास्सुराः। विनाशयाशु तद्यज्ञं वरमेतदहं वृणे। एवं विज्ञापितः प्रीतिस्तव चेत्संहरामि तम्। इत्युक्त्वा सो ऽसृजद्देवः भवद्रोही महेश्वरः। सहस्रबाहुं संक्रुद्धं सहस्राक्षं महाभुजम्। दृष्ट्वा कराळवदनं शङ्खचक्रगदाधरम्। दण्डहस्तं महारौद्रं शार्ङ्गिणं भूतिभूषणम्। वीरभद्र इति ख्यातं देवदेवसमत्विषम्। स जातमात्रो देवेशमुपतस्थे कृताञ्जलिः। तमाह दक्षं तद्यज्ञं विनाशय गणैः क्षणात्। स तथेति जगामाशु गणैर्बलदर्पितैः। मन्युना चोमया सार्द्धं भद्रकाळी महेश्वरी। अन्ये सहस्रशो रुद्रा रोमजाश्च ययुस्तदा। देवाङ्गनासहस्राढ्यं वेदनादविनादितम्। गङ्गाद्वारे गणाध्यक्षा विविशुः परमाद्भुतम्। दक्षमाह क्व मे भागा न दास्यसि हि दास्यसि। वेदास्सन्तीति ते ब्रूयुस्तं मत्तो न श्रृणोषि किम्। दधीचवचनं तद्वद्यस्य वैनाशयाम्यहम्। इत्यु-

क्त्वा यज्ञशालां तां ददाह गणपुङ्गवः। गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः। प्रस्तोता च सह स्तोत्राप्यश्वं चैव गणेश्वराः। ग्रहीत्वा चर्त्विजश्चाराद्गङ्गास्त्रोतसि चिक्षिपुः। ततोबन्धनमुक्तेन सिह्लेनैव च लीलया। वीरभद्रेण दक्षस्य विनाशमगमत्क्रतुः। वीरभद्रः प्रदीप्तात्मा शक्रस्योद्यच्छतः करम् विष्टम्भयददीनात्मा तथा न्येषां दिवौकसाम्। भगस्य नेत्रेचोत्पाट्य करजाग्रेण लीलया। जघान मूर्ध्निपादेन मुष्टिनापि गणेश्वरः। जघान गदया विष्णुं लीलयैव रणाजिरे। अतिष्ठत्स्तम्भितस्तेन पाषाण इव निश्चलः। शरेण कर्षितं शार्ङ्गं द्विधा भूतं तदाभवत्। शार्ङ्गकोटिप्रहराद्वै विष्णोश्चिच्छेद तच्छिरः। तद्विधं निपपाताशु शिरस्तस्य रसातलम्। वायुना प्रेरितश्चैव प्राणेशेन पिनाकिना। प्रविवेश क्षणादेष विनाश्याहवनीयकम्। तत्प्रविध्वस्तकलशं भग्नयूपं वितोरणम्। प्रदीपितमहाशालं दृष्ट्वा यज्ञोऽपि दुद्रुवे। तदा तं मृगरूपेण धावन्तं गहनं प्रति। वीरभद्रस्समादाय छिन्नोरस्कं तदाकरोत्। छिन्नबाहुशिरोरस्का देवा मुनिगणा अपि। एवं भूते महायुद्धे भगवान् पद्मसम्भवः। ब्रह्मा। दक्षक्रतौ गणैर्देवा हताः पाहि चराचरम्। इति स्तुतस्साम्बशिवः ब्रह्मणा च तदो ऽवदत्। वीरभद्रेण निहता दक्षो देवा मुनीश्वराः। जीवन्तु विष्णुर्यज्ञश्च प्रीतो हं भवतां शिवः। संपूज्यस्सर्वयज्ञेषु दक्षमद्भक्तिमान्भव। भविष्यसि गणेशानः कल्पान्ते ऽनुग्रहान्मम। तावत्तिष्ठ ममादेशा-

त्स्वाधिकारे सुनिर्वृतः। एवमुक्त्वा तिरश्चक्रे सपत्नीकः सहानुगः"। इत्यादि। महाभारते ऽपि। "विद्रुते सहसा यज्ञे कुपिते च महेश्वरे। तेन ज्यातलघोषेण सर्वे लोकास्समाहताः। बभूवुर्विवशाः पार्थ निपेतुश्च सुरासुराः। आपश्चुक्षुभिरे सर्वाश्चकम्पे च वसुन्धरा। पर्वताश्च व्यशीर्यन्त दिग्नागाश्च विमोहिताः। अन्धेन तमसा लोका न प्राकाशन्त सुवृत। जघ्निवान्सह सूर्येण सर्वेषां ज्योतिषां प्रभाः। चुक्रुशुः भयभीताश्च चक्रुश्शान्तिं तथैव च। ऋषयस्सर्वभूतानामात्मनश्च सुखैषिणः। पूषणश्चाभ्यवर्षन्त शङ्करः प्रहसन्निव। पुरोडाशं भक्षयन्तं दशनांश्च व्यपातयत्। ततो निश्चक्रमुर्देवा वेपमाना भयार्दिताः। पुनश्च सन्दधे दीप्तं देवानां निशितं शरम्। रुद्रस्य यज्ञभागञ्च विशिष्टं तेत्वकल्पयन्। भयेन त्रिदशा राजन्शरणं प्रतिपेदिरे। तेन चैव हि कोपेन सयज्ञस्तम्भितस्तदा"। इति॥ ७६ ॥

एवं याज्ञियानां सोमादिहविषां यज्ञशिष्टद्रव्यस्यापीश्वरशेषित्वमुपपाद्य सर्वेषामपि याज्ञियानामीश्वर एवेश्वर इत्याह—

**गव्येन सोम हविषा चरुभिश्च पक्वै-**
**स्साध्यान्त्रिसप्त मुनयो विभजन्ति यज्ञान्।**
**सर्वेषु तेष्वपि भवानविशेषतस्त्वां**
**राजानमध्वरविधौ वयमामनामः॥ ७७ ॥**

गव्येन पयोदधिघृतलक्षणेन साध्यान् औपासनादीन्

सप्त स्थालीपाकाग्रयणाष्टकापिण्डपितृयज्ञमासिश्राद्धचैत्र्याश्वयुजीति सप्तपाकयज्ञान् सोमहविशा सोमहविषा साध्यान् अग्निष्टोमो ऽत्यग्निष्टोमोक्थ्यषोडशी वाजपेयातिरात्राप्तोर्याम इति सप्त होमयज्ञान् पक्वैश्चरुभिस्साध्यान् अग्न्याधेयाग्निहोत्रदर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यनिरूढपशुबन्धसौत्रामणीति सप्तहविर्यज्ञान् मुनयो विभजन्ति तेषु सर्वेष्वपि भवान्स्वामीति शेषः। तथा च श्रुतयः। "त्रिस्सप्त यद्गुह्यानि त्वे उत्पादाविदहन्निहिता यज्ञियासः" इति। त्रिस्सप्त एकविंशसङ्ख्यानि रसस्यभूतानि पदाः पदानि यज्ञाः त्वे उत् त्वय्येव निहिताः निहतानि यज्ञियास ऋत्विजः तान्यविदः आलम्बन्तेति वयमविशेषतः त्वामध्वरविधौ राजानमामनामः। तत्र श्रुतिः "गाथपतिं मेध पतिम्। इति। "आवो राजानमध्वरस्य रुद्रम्"। इति॥ ७७॥

ननु "अग्नयेरुद्रवते पुरोडाशमष्टाकपालं निर्वपेत्"। इति विहिते रुद्रवदग्निदेवताके कर्मणि विहितयोः। "त्वमग्ने रुद्रः"। "आवो राजनम्"। इति याज्यापुरोनुवाक्ययोश्च रुद्रोपसर्जनकाग्निप्रकाशकत्वाद्रुद्रस्यापकर्षः प्रतीयत इत्याह—

अग्निं प्रकाशयतु शंकर रुद्रवन्तं
मन्त्रस्त्वमग्न इति वा तदनन्तरो वा।
राजन्वती क्षितिरितीव विशेषणस्य
नालं प्रतीपमपनेतुमिमौ प्रकर्षम्॥ ७८॥

हे शङ्कर। "त्वमग्ने"। इत्यनुवाक्यमन्त्रस्तदनन्तरो वा। "आवो राजानम्"। इति पुरोनुवाक्यमन्त्रश्च रुद्रवन्तं रुद्रविशिष्टिमग्निं प्रकाशयतु। "अग्नये रुद्रवते"। इति विधिवाक्योक्तरुद्रवन्तमग्निं स्मारयत्वित्यर्थः तथापि राजन्वती क्षितिरिति वाक्यं विशेषणभूतस्यापि राज्ञः प्रकर्षं नापनिनीषति तथा अग्नौ नीयमानावप्येतौ मन्त्रौ तद्विशेणभूतस्य रुद्रस्य प्रकर्षं नापनीयत इत्यर्थः ॥ ७८ ॥

किञ्च। रौद्रीं रोहिणीमालभेत। इति विहितायां रौद्रपशुव्यतिरिक्तावनयोरेव मन्त्रयोर्याज्यापुरोनुवाक्यत्वेन रुद्रैकप्रकाशकत्वाद्रुद्रप्रधानावेवेमौ मन्त्रावित्याह—

या रोहिणी भवति देव तदा त्वदीया
तस्यां त्वदेकविषयौ विषमाक्ष दृष्टौ।
मन्त्राविमौ तदिह यज्ञपतित्वमीश
स्पष्टं त्वदेकविषयं प्रतियान्ति धीराः ॥ ७९ ॥

प्रतियान्ति जानन्ति तथा च पुराणवचनम्। "पृथुर्मरुत्तो भरतश्शशिबिन्दुर्गयश्शिबिः। रामोऽम्बरीषो मान्धाता दिलीपो ऽङ्गो भगीरथः। सुहोत्रो रन्तिदेवश्च ययातिस्सगरस्तथा। षोडशैते महीपालाश्शिवमिष्ट्वा दिवङ्गताः"। इति। तथा च रामायणेऽपि। "माहेश्वरमिदं सत्रमसमाप्तं दहेत्कुलम्। ते

तु रामस्य तच्छ्रुत्वा नमस्कृत्य वृषत्वजम्। अश्वमेधं द्विजास्सर्वे पूजयन्ति च नित्यशः"। इत्यादि ॥७९॥

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेत्। इति वाक्ये ऽग्निविशेषणत्वेन रुद्रस्य निर्देशः प्रकर्षमेव गमयतीति सोदाहरणमाह—

पित्रा कुमारमिव भृत्यमिवेश्वरेण
शिष्यं गिरीश गुरुणेव गुणाधिकेन।
अग्निं त्वया कृतविशेषणमूचिवांसौ
मन्त्रा विमौ गमयतः परमं प्रकर्षम् ॥ ८० ॥

पित्रा कृतविशेषणं कुमारमिव ईश्वरेण स्वामिना कृतविशेषणं भृत्यमिव गुरुणा कृतविशेषणं शिष्यमिव गुणाधिकेन त्वया कृतविशेषणमग्निमूचिवांसावुक्तवन्ताविमौ मन्त्रौ परमं प्रकर्षं गमयतः आज्ञापयतः निर्देशगतप्राधान्यं वस्तुगतप्राधान्यं नोपरुन्ध्यादिति भावः। अग्निप्रकाशवाक्येषु रुद्रसम्बन्धादेवाग्नेः प्रकर्षः प्रतीयते रुद्रस्य प्रकर्षः प्रतीयत इति किमुवक्तव्यं तथा हि। "वारादञ्जनयाग्रेग्निं य एको रुद्र उच्यते। असङ्ख्यातास्सहस्राणि स्मर्यते न च दृश्यते।" इति अस्यार्थः वारादमग्निमग्रे जनय यो ऽग्निरेक एव रुद्रात्मना सूयते अथवा द्वितीयरुद्रात्मना सूयते असङ्ख्याताः देवतास्सन्ति तेषां मध्ये रुद्र एव जगत्कर्तृत्वेन स्मर्यते मांसलोचनैर्नदृश्यते तादृशरुद्रात्मनाग्निस्सूयत इति रुद्रोत्कर्षादेवाग्नेः प्रकर्षः ॥ ८० ॥

"गाथपतिंमेधपतिम्"। इत्येषा ऋग्भवन्तं मेधपतिं यज्ञपतिं वदति। "आवोराजानम्"। इति मन्त्रः भवन्तमध्वरविधेः राजानमाह—

ऋक्संहिता वदति मेधपतिं भवन्तं
राजानमध्वरविधेरयमाह मन्त्रः।
त्वत्सूक्तमन्त्रगणमण्डनमौलिरत्नं
रूपेण च त्वदभिधानगृहीतशक्तिः॥ ८१॥

"गाथपतिंमेधपतिम्"। इत्येषा ऋग्भवन्तं मेधपतिं वदति। "अयमावो राजानम्"। इति मन्त्रः भवन्तमध्वरविधेराजानमाह अध्वरराजत्वप्रतिपादकादयम्। आवो राजानम्। इति मन्त्रोऽपि। गाथपतिम्। इति मन्त्र वद्रौद्र एवेति भावः ननु। "आवो ऽष्टादश वामदेवस्त्रिष्टुबग्निः"। इति शौनकवाक्यात्। आवो राजानम्। इति मन्त्रस्याग्निदेवताकत्वं प्रतीयत इत्यत आह त्वदिति त्वत्सूक्तमन्त्रगणमण्डनमौलिरत्नं त्वत्सूक्ते रुद्रसूक्ते मन्त्रसमूहालङ्कारशिरोमणिः शौनकादिभिः पठितो ऽप्यध्वर्युभिः "इमारुद्रा" येति सूक्तान्ते पठित इति भावः। स्वरूपपर्यालोचनयापीश्वरमेव प्रकाशयतीत्याह रूपेणेति रूपेण स्वरूपपर्यालोचनया त्वदभिधानग्रहीतशक्तिः त्वदर्थप्रतिपादनस्वीकृतसामर्थ्यः॥ ८१॥

"यावन्नयाति मरणं यावन्नाक्रमते जरा। यावन्नेन्द्रिय-

वैकल्यं तावत्पूजय शङ्करम्''। इति शिवधर्मवचनमूलत्वादपि रौद्र एवायं मन्त्र इत्याह—

**त्वत्कं पुरा मरणतस्तनयित्नुकल्पा-**
**दाकारणं परमकारुणिक ब्रुवाणः।**
**मन्त्रो ऽयमाव इति यावदुपक्रमाय**
**मूलं महेश विदितं शिवधर्मसूक्तेः॥ ८२॥**

हे परमकारुणिक। "आव"। इत्ययं मन्त्रस्तनयित्नुकल्पान्मेघसदृशात् मरणतः मरणात् अव्यवस्थागमनादित्यर्थः पुरा पूर्वं त्वत्कं त्वदीयं आकारणमाह्वानं आराधनमिति यावत् ब्रुवाणः यावदुपक्रमायाः यावच्छब्दप्रारंभायाः शिवधर्मसूक्तेः यावन्नयातीति वचनस्य मूलं स च मन्त्रस्संहितायामेवाम्नायते। "आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः अग्निं पुरातनइत्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्"। इति। अस्यार्थः। अध्वरस्य यज्ञस्य रोदस्योर्द्यावापृथिव्योश्च राजानं होतारं दातारं सत्ययजं अमोघाराधनं अग्निं अग्निमूर्तिमास्थाय स्थितं रुद्रमीश्वरं तनयित्नोः सकारलोपः छांदसः स्तनयित्नुसदृशात् अचित्तान्मरणात् पुरा पूर्वं वः युष्माकं अवसे रक्षणाय कृणुध्वं आह्वयत। परिचरतेत्यर्थः एवमुक्तप्रकारेण पंचविधलक्षणस्यापि परमेश्वरविषयत्वेन श्रुत्यैव स्वरसतः प्रतिपादनात् नमतां स्तुवतां उपस्कानां जपतां साक्षात् स्वतन्त्रेण फलदाता परमेश्वरः। तथा च लैङ्गे

श्रूयते। "मत्स्थानमेतत्परमं ध्रुवन्नित्यं सुशोभनम्। तपसाराध्य देवेशं पुरा लब्धं हि शङ्करात्। एवं नाम्नां सहस्रेण तुष्टाव परमेश्वरम्। स्तपयामास च विभुं पूजयामास शंकरम्। परीक्षार्थं हरेस्तेषु कमलेषु महेश्वरः। गोपयामास कमलं तदेकं भुवनेश्वरः। हृतपुष्पो हरिस्तत्र किमिदं त्वित्यचिन्तयत्। ज्ञात्वा स्वनेत्रमुद्धृत्य सर्वतत्त्वावलंबनम्। पूजयामास भावेन नाम्नाऽनेन जगद्गुरुम्। ततस्तत्र विभुर्दृष्ट्वा तथा भूतं हरो हरिम्। तस्मादवतताराशु मण्डलात्पावकस्य तु। कोटिभास्करसंकाशजटामकुटमण्डितम्। दिग्ममालावृतं दिव्यं तीक्ष्णदंष्ट्रं भयानकम्। शूलटंकगदाचक्रपाशांकुशधरं हरः। वरदाभयहस्तञ्च द्वीपिचर्मोत्तरीयकम्। इत्थंभूतं तदा दृष्ट्वा भवं भस्मविभूषितम्। पुनर्नमश्चकाराशु देवदेवं जनार्दनः। दुद्रुवुस्तं परित्यज्य सेन्द्रा देवास्त्रिशूलिनम्। चचाल ब्रह्मभवनं चकंपे च वसुंधरा। ददाह तेजसस्तंभः प्रान्ते च शतयोजनम्। अधस्ताच्चोर्ध्वतश्चैव हाहेत्यूचुश्च ते सुराः। तदा प्राह महादेवः प्रहसन्निव शंकरः। संप्रेक्ष्य प्रणयाद्विष्णुं कृतांजलिपुटं स्थितम्। मया तवाद्य कर्तव्यं किं वा ब्रूहि जनार्दन। सुदर्शनाख्यं चक्रञ्च ददामि तव शोभनम्। यद्रूपं भवता दृष्टं तद्वै लोकभयंकरम्। हिताय तव लोकानां धृतं भावय सुव्रत। शान्तं रणाजिरे विष्णो देवानां दुष्टसाधनम्। शान्तस्य चास्त्रं शान्तस्या च्छान्तेनास्त्रेण किं फलम्। शान्तस्य शममूलत्वाच्छान्तिरेव तपस्विनाम्। योद्धुं महाबलच्छेदः परस्य बलवृद्धिना। देवैर-

शान्तं यद्रूपं मदीयं भावयाच्युत। क्षमाबुद्धिर्नकातर्यं योद्धुर्देवारिसूदन। किंच सर्वक्षामाकालं जीवनार्थं जनार्दन। अनागते ह्यतीते च दौर्बल्ये स्वजनोत्तरे। एवमुक्त्वा ददौ चक्रं सूर्यायुतसमप्रभम्। नेत्रं च नेता जगतां प्रभोर्वैपद्मसन्निभम्। तदा लोकास्तु तं प्राहुः पद्माक्ष इति सुव्रताः। दत्वैव नयनश्चक्रं विष्णवे नीललोहितः। पस्पर्श च कराभ्यां वै सुशुभाभ्यामुवाच ह"। इति। देवानां देवकार्येषु महेश्वरानुमतिर्महाभारते श्रूयते। "ततोऽर्जुनहृषीकेशौ पुनःपुनररिंदमौ। पुनःपुनश्च संहृष्टौ शिरोभ्यां तौ महामतौ। गत्वा स्वशिबिरंवीरौ मुदा परमया युतौ। यथाभावेनानुमतौ महासुरनिपातिनौ। इंद्रविष्णु पुरा प्रीतौ जंभस्य वधकांक्षिणौ। यदा द्रक्ष्यसि देवेशं त्र्यक्षं शूलधरं शिवम्। तदा दास्यामि ते तात दिव्यान्यस्त्राणि सर्वशः। क्रियतां दर्शने यत्नः देवस्य परमेष्ठिनः। दर्शनात्तस्य कौन्तेय संसिद्धिं द्रुतमेष्यसि। स्वर्गं गच्छेत्यनुज्ञातस्त्र्यंबकेन यदार्जुनः। प्रणम्य शिरसा राजन्प्रांजलिर्भवमैक्षत"। इत्यादि ॥ ८२ ॥

एवंद्वादशभिश्लोकैः क्रतुशेषित्वलक्षणम्। प्रतिपादितमाचार्यैस्सप्रपंचं महेशितुः। श्रुतिभिः प्रतिपाद्यैवमीशितुः पञ्चलक्षणम्। अथाचार्यश्श्रुतीरन्याविचारयति तत्परः। एवं पंचविधलक्षणलक्षितस्य देवतासार्वभौमस्याकुतोभयस्य सर्वेषां भयनिवर्तकस्य परमेश्वरस्य कथं भीमत्वमित्याशंक्यपरिहरति ॥

भीमो ऽसि शंकर मृगो नु निदर्शनं ते
तेजोभिरुच्चलितसूर्यसहस्रकल्पैः।
अक्रोधनस्मितमुखो ऽपि निजानुभावा-
दापाततस्तनुभृतां नृपतिर्भयाम ॥ ८३ ॥

हे शंकर उच्चलितसूर्यसहस्रकल्पैः उद्यत्सूर्यसहस्रसदृशैः। तत्र श्रुतिः। "न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतो ऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदम् विभाति"। इति। तेजोभिः भीमो ऽसि बिभेत्यस्मा-दिति भीमः तत्र श्रुतिं निदर्शनत्वेनाह मृगमिति। मृगन्नभीममु-पहर्तुमुग्रं इति। श्रुतिवाक्यं ते भीमत्वे निदर्शनम्। "स्तुहि श्रुतं गर्तसदं युवानं मृगन्नभीममुपहर्तुमुग्रम्"। इति। श्रुतं वेदान्तेषु प्रसिद्धं गर्तसदं हृत्पुण्डरीकाख्यावटस्थितं युवानं मृगं नु सिंह-मिव भीमं उपहर्तुं उपहन्तारं पापानां उग्रं अनभिभवनीयं सदा-शिवं हे अन्तरात्मन् स्तुहि। इति तस्यार्थः। मृगन्नभीममित्यत्र तेजःप्रकर्षवत्तया दुरासदत्वेन सिंहनिदर्शनतया अतस्सन्नपि तथा भवितुं नार्हसीत्यर्थः अनेन स्वभावसौम्यस्यापि देवस्य तेजःप्रक-र्षादेव भीमत्वसंकीर्तनमुपपन्नमिति भावः अत्र दृष्टान्तमाह। अक्रोधन इति। अक्रोधनः अक्रोधनशीलः स्मितमुखः स्मितं मन्दहासं मुखे यस्येति स्मितमुखो ऽपि निजानुभावात् स्वकी-यतेजःप्रकर्षात् नृपतिः तनुभृतां आपाततः भयाय भवति सक-लप्रजारंजनधर्मिणो ऽपि राज्ञः स्वभावसौम्यं मुखं भयंकरं भवति

श्रूयते च। "तस्माद्राजमुखं भीष्मं भावुकम्"। इति कविभिः इत्युक्तम्। "द्वारे नियुक्तपुरुषानुमतप्रवेशः सिंह्मासनान्तिकचरेण सहोपसर्पन्। तेजोभिरस्य विनिवर्तितदृष्टिपातैर्वाक्यादृते पुनरिव प्रतिवारितो ऽस्मि"॥ इति। "न च न परिचितो नचाप्यरम्यश्चकितमुपैमि तथापि पार्श्वमस्य। सलिलनिधिरिव प्रतिक्षणं मे भवति स एव नवो नवो ऽयमक्ष्णोः"॥ इति च॥ ८३॥

तेजःप्रकर्षादेवास्य भीमत्वमुपपाद्य ब्रह्मत्वात् स्वाभाविकं भीमत्वमस्तीत्याह—

अभ्युद्यतं गिरिश वज्रमधीमहे त्वां
त्वद्बिभ्यतः पवनभानुकृशानुशक्राः।
मृत्युश्च तत्तदधिकारभृतस्तथान्ये
ब्रह्मत्वलक्षणमयं भयहेतुभावः॥ ८४॥

हे गिरिश त्वामभ्युद्यतं उद्गीर्णं वज्रं कुलिशमधीमहे। "महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति"। इति। त्वत् त्वत्तः भवतः पवनभानुकृशानुशक्राः वायुसूर्याग्नींद्राः त्वत्तो बिभ्यतो भवन्तीति शेषः मृत्युश्च तत्तदधिकारभृतः तथाशब्दश्चार्थे तत्तदधिकारभृतः अन्ये च त्वत्तो बिभ्यतीति यत् अयं भयहेतुभावः भयहेतुत्वं ब्रह्मत्वलक्षणं ब्रह्मभावस्यासाधारणो धर्मः। तथा च कठवल्लीषु श्रूयते। "भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिंद्रश्च वायुश्च मृत्युर्धावति पञ्चमः"॥ इति। "एक-

मेवाद्वितीयं ब्रह्म। "एक एव रुद्रो न द्वितीयाय तस्ते"। इति परस्परसमानाभ्यां श्रुतिभ्यां गतिसामान्यन्यायेन रुद्र-ब्रह्मशब्दयोः पर्यायत्वमेव सिद्धम्। तदुक्तं व्यासस्तुतौ। "एको रुद्रो न द्वितीयाय तस्ते तद्ब्रह्मैकं नेह नानास्ति किं चित्। यद्य-स्त्यन्यः केन वा कुत्र चिद्वा व्याचष्टां तद्यस्य शक्तिस्समग्रा"॥ इति। ननु तन्त्रवार्तिके भट्टाचार्यैः। "एक एव रुद्रो न द्वितीयाय तस्थे। सहस्राणि सहस्रशो ये रुद्रा न अधिभूम्याम्"। इत्यत्र श्रुत्योर्विरोधमाशंक्य। एक एव रुद्रो न द्वितीयाय तस्थे। इत्येतद्वाक्यस्य रुद्रविषयम्। एककपालं निर्वपेत्। इत्यत्रैव तात्पर्यं न रुद्रस्यैकत्वमिति यदुक्तं एतद्वाक्यस्य कर्मपरत्वादेव तत्र यद्वा तद्वा भवतु। श्वेताश्वतरोपनिषदि। "एको हि रुद्रो न द्वितीयाय तस्थुः"। इति। अथर्वशिरस्यपि। "एक एव रुद्रो न द्वितीयाय तस्थे"। इति। श्रूयते। तत्र कर्मपरत्वाभावादद्वितीयत्वमेवेति तस्माद्रुद्रब्रह्मशब्दयोः पर्यायत्वमिति वज्रलेपम्॥ ८४ ॥

रुद्रो वा एष यदग्निस्तस्यै ते तुनुवौ घोरान्या शिवान्या।
इति श्रुतिसिद्धयोरीश्वरतन्वोः कार्यमाह—

घोरा शिवा च भगवन्नुभयी तनुस्ते
घोरा भिषज्जति भवार्तमुपास्यमाना।
अन्या भिषग्जनकृतां रुजमीक्षमाणा
दृष्ट्या ददाति शिवताम शिवात्मनो ऽपि ॥८५॥

भवतो रुद्रब्रह्मशब्दाख्या भक्तानुग्रहार्थं बह्व्यस्तनवस्सन्ति तास्सुकृतिनां भवदनुग्रहवशाज्छान्तरूपा आयान्ति दुष्कृतिनां तु ता एव घोरा घोररूपा आयान्ति हे भगवन् घोराघोररूपा शिवा शान्ता चेति एवमुभयी तनुः तन्यते जगदनेनेति तनुः शरीरम् । तत्र घोरा तनुरुपास्यमाना मनोवाक्कायकर्मभिः यागस्तोत्रप्रणामैः आराध्यमाना भवार्तं संसाररोगिणं भिषज्जति चिकित्सति ईश्वरस्य संसाररोगचिकित्सकत्वं श्रुतिपुराणेषु प्रसिद्धम् । "भिषक्तमं त्वा भिषजां शृणोमि" । इति । "अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्" । इति च । तथा च पुराणवचनम् । "निदानज्ञो यथा वैद्यो रोगस्य विनिवर्तकः । उपायैर्भेषजैस्तद्वत् ज्ञानयोगोपदेशतः । संसारस्येश्वरो नित्यं समूलस्य निवर्तकः । संसारवैद्य इत्युक्तस्सर्वतत्वार्थवेदिभिः" । इति । अन्या शिवा तनूः भिषक्जनकृतां संसाररोगिणां तदुपशमनोपायभूतकर्मानुष्ठापनं भिषग्जनं तदपि तेषामसह्यमिति मत्वा तेन कृतां रुजं दुःखमीक्षमाणा सती दृष्ट्या दर्शनमात्रादेव अशिवात्मनो ऽपि शिवतां मङ्गळरूपतां ईश्वरतां वा आपादयति । तथा च पुराणवचनम् । "यं दृष्ट्वा न पुनर्जन्म लभन्ते मानवा भुवि । सो ऽयमायाति भगवन्शंकरश्शशिभूषणः" ॥ इति ॥ ८५ ॥

यच्छतरुद्रीयं जुहोति यै वास्य घोरा तनूस्तान्तेय शमयति यद्वसोर्द्धारां जुहोति यैवास्य शिवा तनूस्तां तेन

प्रीणाति। इति श्रुतेरभिप्रायमाह—

**घोरान्नमो विदधतश्शमयन्ति रुद्रै-**
**रार्ता हि घोरमुपयान्ति चिकित्सितारम्।**
**प्रीणन्ति शङ्कर शिवाञ्चमकानुवाकै-**
**र्होमस्य यत्तव भवन्त्युभये ऽपि मन्त्राः ॥ ८६ ॥**

यद्यस्मात्कारणात्तव होमस्य उभयेऽपि मन्त्राः रुद्रचमकानुवाका भवन्ति। तत्र श्रुतिः। "यच्छतरुद्रीयं जुहोति यद्वसोर्द्धारां जुहोति"। इति च। "वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे"। इत्ययादि। एतैर्द्वादशभिर्मन्त्रैरेकाहुतिं हुत्वा अविळम्बेन। "प्राणश्च मे पानश्च मे"। इत्यादिद्वादशभिर्मन्त्रैरेकाहुतिर्हूयते सा वसोर्द्धारा। तत्र श्रुतिः। "सन्ततां वसोर्द्धारां जुहोति"। इति। "नमस्ते रुद्र मन्यवे"। इत्यादिभिर्मन्त्रैर्नमो नमस्कारं विदधतः कुर्वन्तो घोरां तनूं शमयन्ति शान्तां कुर्वन्ति अर्ता रोगिणः औषधप्रदानेन घोरं रोगनिवर्तकं चिकित्सितारं चिकित्सकं उपयान्ति चमकानुवाकैः। "वाजश्च मे"। इत्यादिभिः शिवां तनूं प्रीणयन्ति। तथा च ब्रह्माण्डपुराणे श्रूयते। "द्वे तनू तव देवस्य वेदज्ञा ब्राह्मणा विदुः। घोराप्यन्या शिवाप्यान्या ते प्रत्येकमनेकधा। घोरा तनूस्तव ब्रह्मन्सूर्यो विष्णु-

हुताशनः। शिवा तनूस्तव ब्रह्मन्नापो ब्रह्मा च चंद्रमाः"। इत्यादि ॥ ८६ ॥

चमकानामीश्वरस्य वाजादिदातृत्वेन प्रतिपादने परिशेष-प्रमाणमित्याह—

**विष्णु प्रजापति पुरंदर पूर्वकेषु**
**वाजादितुल्यमितरेष्वपि दैवतेषु।**
**आशंसितेषु चमकाः परिशिष्यमाणं**
**दातारमीश्वर भवन्तमशब्दमाहुः ॥ ८७ ॥**

विष्णुप्रजापतिपुरंदरपूर्वकेषु इतरेषु दैवतेष्वपि वाजादि-तुल्यं अन्नादितुल्यं आशंसितेषु। "विष्णुश्चम इन्द्रश्च मे"। इत्यादिभिराकांक्षितेषु। चमकाः। "वाजश्च मे"। इत्यादयो मन्त्राः परिशिष्यमाणं भवन्तमशब्दं दातारमाहुः। "अग्निश्च म इन्द्रश्च मे"। इत्यादिवदाशास्यत्वेनाननुवादाद्दातृत्वेनेश्वरः परिशिष्यते। इति भावः। तथा च पुराणवचनम्। "अहमेव जगत्कर्ता युवयोः कारणं त्वहम्। मत्प्रसादात्पदं लब्धं ब्रह्मन्विष्णो त्वयापि च"। इति। शिवधर्मे ऽपि। "इन्द्रनीलमयं लिङ्गं विष्णुः पूजयते सदा। विष्णुत्वं प्राप्तवांस्तेन धाम चैकं सनातनम्। ब्रह्मापूजयते लिङ्गं नित्यं शैलमयं शुभम्। तस्य संपूजनादेव प्राप्तं ब्रह्मत्वमुत्तमम्। शक्रो ऽपि देवराडिन्द्रो लिङ्गं मणिमयं शुभम्। भक्त्या पूजयते नित्यं तेन शक्रत्वमाप्तवान्"।

इति। तथा च वायवीयसंहितायामीश्वरं प्रति पार्वतीवचनम्। "तमाहूय महादेवी तपसा किं करिष्यसि। त्वत्तो लब्धपदा एते सर्वे ब्रह्मादयस्सुराः"। इति ॥ ८७ ॥

अपः परिषिञ्चति रुद्रस्यान्तर्हित्यै। इति श्रुतेरर्थमाह—

**युक्तं नमानयितुमीश्वर सन्निधौ ते**
**देवान्तराणि महतामिव मर्त्यमात्रम्।**
**अन्तर्द्धिमध्वरविधौ तदपेक्षमाणा-**
**स्त्वत्कर्मसीम्नि परिषेचनमाचरन्ति ॥ ८८ ॥**

हे ईश्वर महतां सन्निधौ मर्त्यमात्रमिव नरपतीनां समक्षे प्राकृतनरमात्रमिव ते परमेश्वरस्य सन्निधौ देवान्तराणि मानयितुं पूजयितुं न युक्तं तस्मात्कारणात् अध्वरविधौ अन्तर्द्धिमपेक्षमाणाः त्वत्कर्मसीम्नि त्वदाराधनकर्मसमाप्तौ परिषेचनं रुद्रोऽन्तर्हितो भूयादिति परिशेषचनं आचरन्ति कुर्वन्ति ॥ ८८ ॥

स वै वो वरं वृणा इति वृणीष्व इति स एतमेव वरमवृणीत पशूनामाधिपत्यन्तदस्यैतत्पशुमान्नामेति अहमेव पशूनामधिपति रित्यादीश्वरस्य पाशुपत्यवरणप्रतिपादकश्रुतिवचनसामर्थ्यवादत्वेन विवक्षितार्थं वक्तुं जीवानां पशुत्वमीश्वरस्य पतित्वं स्वाभाविकमित्याह—

**आत्मान्तराणि पशवः परतन्त्रभावा**
**स्स्वातन्त्र्यतः पशुपते पतिरीश्वर त्वम्।**

**आत्मानमौपनिषदाः प्रवदन्त्यनीश-**
**मीशं भवन्तमुभयोरुभयं स्वभावः ॥ ८९ ॥**

आत्मान्तराणि ईश्वरादन्ये जीवाः परतंत्रभावात् पशवः तथा च स्कांदे विष्णुवचनम्। "पशवो हि वयं सर्वे सदेवासुरमानुषाः। पतिस्त्वमेव सर्वेषां लोकानां परमेश्वरः"। इति। वायवीयसंहितायामपि। "ब्रह्माद्याः स्थावरन्ताश्च पशवः परिकीर्तिताः। पशूनामेव सर्वेषां प्रोक्तमेतन्निदर्शनम्"। आदित्यपुराणे ब्रह्मवचनम्। "स एव बध्नाति पशूनस्मदादीन्महेश्वरः। संसारमोचको देवः पशूनामिति हि श्रुतिः"। इति। हे ईश्वर पशुपते स्वातंत्र्यतः त्वं पतिः तेषां पशूनां पालकः। तथा च महाभारते। "स मुदा यत्पशून्पाति तैश्चैव रमते पुनः। तेषां पतिश्च यस्तस्माद्रुद्रः पशुपतिस्मृतः"। इति। लैङ्गे ऽपि। "ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः। पशवः परिकीर्त्यन्ते संसारवशवर्तिनः। तेषां पतित्वाद्देवेशश्शिवः पशुपतिस्मृतः। स एव मोचकस्तेषां भक्त्या सम्यगुपासितः"। इति। तत्र प्रमाणमाह आत्मानमिति औपनिषदाः उपनिषदमधीयानाः आत्मानं जीवं अनीश्वरं परतन्त्रं वदन्ति। तत्र श्रुतिः। "आत्माप्यनीशस्सुखदुःखहेतोरनीशया शोचति मुह्यमानः"। इति। भवन्तमीशं प्रवदन्ति। अथर्वशिरसि श्रूयते। "अथ कस्मादुच्यते महेश्वरः यस्सर्वान्लोकान्सम्भक्षस्सम्भक्षयत्यजस्रं सृजति विसृजति वासयति तस्मादुच्यते महेश्वरः"। इति।

अथर्वशिखायामपि। "सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्च शंभुः"। इति। उभयोः जीवेश्वरयोः उभयं अनीशत्वमीश्वरत्वं च स्वभावः। तथा च श्वेताश्वतरोपनिषदि। "य ईशे अस्य जगतो नित्यदेव नाहेतुर्विद्यत ईशानाय"। इति। न हीश्वरस्येश्वरत्वे जीवानामनीश्वरत्वे च स्वभाववादमन्तरेणान्यत्किञ्चिन्निमित्तमस्ति तथा हि अनादिमलनिर्मुक्तत्वात्परमेश्वरस्य सर्वज्ञत्वं सर्वेश्वरत्वं सर्वजगन्निर्मातृत्वं पशुपतित्वञ्च वायवीयसंहितायामुक्तम्। "अनादिमलसंश्लेषप्रागभावात्स्वभावतः। अत्यन्तं परिशुद्धात्मेत्यतो य एव उच्यते"। इति। आत्मान्तराणान्त्वनादिमलावृतत्वात् अनीशत्वं पशुत्वं असर्वज्ञत्वञ्च एतद्द्वयमपि स्वाभाविकमेव तथा च वायवीयसंहितायाम्। "स्वभावविमलो यद्वत्सर्वानुग्राहकश्शिवः। स्वभावविमलास्तद्वदात्मानो जीवसंज्ञिताः। अन्यथा संसरन्त्येते नियमान्न कथं शिवः। कर्ममायानुबंधोऽस्य संसारः कथ्यते बुधैः। अनुबंधोऽयमस्येति न शिवस्येति हेतुमत्। स हेतुरात्मनामेव निजोनागंतुकोऽमलः। आगन्तुकत्वे तस्यापि भावः केनापि हेतुना"। इति। ईश्वरस्येश्वरत्वमन्येषामनीश्वरत्वं स्वाभाविकं चेत्। "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वामुं शान्तिमृच्छति"। इत्यादिगीतावचनानां कथमर्थवत्त्वमिति चेन्न गीतासु मामित्यस्मच्छब्दस्य वक्ता परमेश्वरः कृष्णस्तु प्रवक्तैव केवलमस्मच्छब्दार्थः प्रवक्ता अस्मच्छब्दात्सो न भवति प्रवक्ता

अस्मच्छब्दार्थश्चेत् गीताध्यायिनामपि ईश्वरत्वमुपास्यत्वञ्च स्यात् ईश्वरस्यवक्तृत्वं कृष्णस्य प्रवक्तृत्वं कथमिति चेदुच्यते। सर्वविद्येश्वरात्सर्वज्ञात्परमेश्वरात् गीतां श्रुत्वा विष्णुस्तामेवार्जुनायोक्तवान्। तथा च कूर्मपुराणे। "सनत्कुमारो भगवान्संवर्ताय महामुनिः। दत्तवानैश्वरं ज्ञानं सो ऽपि सत्यव्रताय तु। सत्यव्रतो ऽपि योगीन्द्रः पुलहाय महर्षये। प्रददौ गौतमायाथ पुलहो ऽपि प्रजापतिः। अंगिरा वेदविदुषे भारद्वाजाय दत्तवान्। जैगिषव्याय कपिलस्तथा पञ्चशिखाय च। पराशिरो ऽपि सनात्कापिता मे सर्वतत्त्ववित्। लेभे तत्परमं ज्ञानं तस्माद्वाल्मीकिराप्तवान्। ममोवाच पुरा देवस्सतीदेहार्द्धभाक्शिवः। महादेवो महायोगी रुद्रः किल पिनाकधृक्। नारायणो ऽपि भगवान्देवकीतनयो हरिः। अर्जुनाय स्वयं साक्षादुक्तवानिदमुत्तमम्"। इति। श्वेताश्वतरोपनिषद्यपि। "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्येत्"। इति। ईश्वराद्विष्णोर्विद्यालाभश्श्रूयते शान्तिपर्वण्यपिअष्टादशानां विद्यानामादिकर्ता परमेश्वरः परमेश्वरसकाशादेव विष्ण्वादिसकलदेवानां विद्यालाभश्श्रूयते। "त्वं हि सर्वविधानज्ञ सत्वानां त्वं गतिः परा। संकरो न भवेदत्र यथावद्वै विचार्यताम्। ततस्स भगवान्ध्यात्वा तदा शूलवरायुधः। देवदेवो महादेवः कारणं जगतां परम्। ब्रह्मविष्णिवन्द्रसहितस्सर्वैश्च ससुरासुरैः। लोकसंधारणार्थं च लोकसकरनाशनम्। आत्मानमात्मना दण्डमसृजद्देवसत्तमः। तस्मा-

चधर्माचरणान्नीतीं देवीं सरस्वतीम्। असृजद्दण्डनीतिं वै त्रिषु लोकेषु विश्रुताम्। यया स नीयते दण्डस्सततं पापकारिषु। दण्डस्य नयनात्मा हि दण्डनीतिरिहोच्यते। भूयस्स भगवान् ध्यात्वा चिरं शूलधरः प्रभुः। असृजत्सर्वशास्त्राणि महादेवो महेश्वरः। दण्डनीतेः प्रयोगंच प्रमाणानि च सर्वशः। विद्याश्च-तस्रः कूटस्थास्तासां भेदविकल्पना। अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश। आयुर्वेदो धनुर्वेदो वेदो गांधर्वकस्त्रयः। अर्थशास्त्रञ्च विद्या ह्याष्टादशैव तु। दश चाष्टौ च विख्याता एता धर्मस्य संहिताः। एतासामेव विद्यानां व्यासमाह महेश्वरः। शतानि त्रीणि शास्त्राणामाह तन्त्राणि सप्ततिम्। व्यास एव तु विद्यानां स्मर्ता देवेन कीर्तितः। तन्त्रं पाशुपदन्नाम पाञ्चरात्रं तु विश्रुतम्। योग-शास्त्रञ्च सांख्यञ्च तन्त्रं लोकायतं तथा। तन्त्रं ब्रह्मतुला नाम तर्कविद्या दिवौकसाम्। सुखदुःखार्थजिज्ञासाकारणञ्चेति विश्रु-तम्। तर्कविद्यास्तथा चाष्टौ समासो न तु विस्तरः। दश चाष्टौ च विज्ञेया पौराणां यज्ञसंहिताः। पुराणानि प्रणीतानि तावदेव हि संहिताः। धर्मशास्त्राणि तद्वच्च ह्येकार्त्थानि तु नान्यथा। एकार्त्थानि पुराणानि वेदाश्चैकार्त्थसंहिताः। नानार्त्थानि च शास्त्राणि तर्कशास्त्राणि शंकरः। प्रोवाच भगवान्देवः कालज्ञा-नानि यानि च। चतुष्षष्टिप्रमाणानामायुर्वेदञ्च सोत्तरम्। अष्टा-दशविकल्पानां दण्डनीतीं च शाश्वतीम्। गांधर्वमितिहासं च

नानाविस्तारमुक्तवान्। इत्येताश्शंकरप्रोक्ता विद्याश्शब्दार्थसं-युताः। पुनर्हेदसहस्रश्च तासामेव तु विस्तराः। ऋषिभिर्देवगं-धर्वैस्सविकल्पस्सविस्तरः। शिवेन ब्रह्मणा चैव विष्णुना च विकल्पिताः"। इत्यादिवाक्यैरीश्वरस्येव कर्तृत्वादि, वक्तैवास्म-च्छब्दार्थः प्रवक्ता ऽर्थो न भवतीतित्यत्र न्यायकुसुमांजलौ उदयनाचार्यैस्समर्थितम्। तद्यता। "अपि चास्मत्पदं लोकवद्वेदे ऽपि प्रयुज्यते। तस्य च लोके न वा चेतनामात्रमर्थः तत्र सर्वथैवाप्रयोगात् नाप्यात्ममात्रमर्थः परमात्मन्यपिप्रयोगप्रसं-गात् अपि तु यस्वतन्त्रेणोच्चरति तमेवाह तथान्वयव्यतिरेका-भ्यामवसायात् ततो लोकव्युत्पत्तिमनतिक्रम्य वेदे ऽप्यनेन स्वप्रयोक्तैव वक्तव्यः अन्यथाप्रयोगप्रसंगात् न च यो यदाच्चा-रयति वैदिकमहं शब्दं स एव तस्यार्थ इति युक्तं तथा सति मामुपास्तीत्यादौ स एवोपास्यस्स्यात्। अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते। इति उपाध्यायशिष्यपरंपरैवात्मन्यैश्वर्यमधि-गच्चेत् तथ च उपासनीयं प्रति उन्मत्तकेळी स्यात् लोके व्यवहारश्चोच्छिद्यते तस्मान्नात्र प्रवक्तास्य वाच्यं अपि त स्मान्नात्र प्रवक्तास्य वाच्यं अपि तु वक्तैवेति व्यवस्थितेः प्रयु-ज्यते वेदे ऽप्यस्मच्छब्दः प्रयोक्तृवचनः अस्मच्छब्दत्वात् लौकि-कवा" दिति एवमन्ये ऽपि यः कः इत्यादयो द्रष्टव्याः इति किञ्च। "वृष्णीनां वासुदेवो ऽस्मि पाण्डवानां धनंजयः"। इति धनंजय इत्यादिवत्कृष्णस्यापि तद्विभूतित्वेन श्रवणात् कृष्णव्यतिरिक्तो

विभूतिमान्परमेश्वर एवास्मच्छब्दार्थ इति युक्तमुत्पश्यामः अतः प्रकृतमनुसरामः ईश्वरस्य पतित्वे। पशुपतये नमः। इत्याद्याश्श्रुतयः प्रमाणम्। पुराणेषु श्रूयते च। "ब्रह्मविष्णुसुरेंद्राद्याः पशवः परिकीर्तिताः। तेषां पतित्वाद्देवेशः शिवः पशुपतिस्स्मृतः"। इति। "स्वतस्सिद्धं पतित्वं मे युष्माकं पशुतापि च" इत्यादि॥ ८९॥

ननु यदीश्वरस्य पाशुपत्यवरणं स्वाभाविकम्। स वै वो वरं वृणा इति वृणीष्वेति स एतमेव वरं वृणीत पशूनामाधिपत्यन्तदस्यैतत्पशुमान्नामेति अहमेव पशूनामधिपतिरसनीति तस्माद्रुद्रः पशूनामधिपतिः। इतीश्वरस्य पाशुपत्यवरणप्रतिपादकाश्श्रुतयः कथमुपपद्येरन्नित्यतआह—

संप्राप्त एव सति शंकरपाशुपत्ये
कस्मै वरेण्य वरणं कृपणोचितं ते।
विध्यर्थमध्ययनचोदनयागृहीता
जल्पन्ति यत्किमपि वन्दिवदर्थवादाः॥ ९०॥

हे वरेण्य शंकर पाशुपत्ये संप्राप्त एव सति नित्यसिद्ध एव सति कृपणोचितं वरणं कस्मै प्रयोजनाय विद्यमानस्य पाशुपत्यस्य वरणे प्रयोजनं न दृश्यत इत्यर्थः वरणप्रतिपादकानां श्रुतीनामर्थवादत्वात् न वरणप्रतिपादने तात्पर्यमित्याह विध्यर्थमिति अध्ययनचोदनया। तस्मात्स्वाध्यायोऽध्येतव्यः। इत्यध्ययनविधिना गृहीता अर्थवादाः विध्यर्थं विधेयपुरुषप्रवृत्त्यर्थं वंदिवत् यत्कि-

मपिअविद्यमानं विद्यमानं वार्त्थं जल्पन्ति। एतदुक्तं भवति। विधिवाक्यं तु पुरुषं प्रेरयितुं विधेयार्त्थस्य प्राशस्त्यमपेक्षते अर्त्थवादवाक्यं च फलवदर्त्थावबोधपर्यवसिताध्ययनविधिपरिगृहीतत्वेन पुरुषार्त्थमपेक्षते ततः पुरुषार्त्थपर्यवसितविध्यपेक्षितप्राशस्त्यं लक्षणयावृत्या समर्पयदर्त्थवादवाक्यं विधिवाक्येन सहैकतामापद्यते न तु स्वतः किंचिदर्त्थं विधत्ते बोधयति वा अतो नार्त्थवादास्स्वार्त्थे प्रमाणं यद्यपि प्रमाणन्तरविरोधाभावे वैयासिकमतेनार्त्थवादप्रतीतो ऽर्त्थो ऽङ्गीक्रियते तथाप्यत्र । "पशुपतये नमः" । इति नित्यसिद्धपाशुपत्यप्रतिपादकश्रुत्यन्तरविरोधात्तद्वरणवाक्यानां न स्वार्त्थपरता इति ॥ ९० ॥

ईश्वरस्य पाशुपत्यवरणाभावं प्रकारान्तरेण प्रतिपादयति ।

**नानापदानवचनादपि वारणीय-**
**स्त्वत्पाशुपत्यवरणप्रतिलम्भवादः ।**
**लब्धुं वरीतुमथवा कथमेक एव**
**वारान्बहूनपि महेश्वर शक्यते ऽर्थः ॥ ९१ ॥**

त्वत्पाशुपत्यवरणप्रतिलम्भवादः पाशुपत्यप्रार्थनातत्प्राप्तिवादः नानापदानवचनात् विष्णवादिदेवतान्तरदुष्करत्रिपुरदहनप्रजापतिशासनाद्यद्भुतकर्मप्रतिपादकश्रुतिवचनबलादपि वारणीयःपरिहरणीयः न स्वार्थपर इति व्याख्येय इत्यर्थः त्रिपुरदहनापदाने । "सो ऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानि" । इति ।

प्रजापतिशासनापदाने। "स एतमेव वरं वृणीत पशूनामाधिपत्यन्तदस्यैतत्पशुमान्नाम पशुमान्भवति यो ऽस्यैतदेवन्नाम वेद"। इति। मृगयुवेषपरिग्रहापदाने च। "मार्गीयं भवति तं देवा एवं मृगयुमिति वदन्त्येते नैव स उभयेषां पशूनामाधिपत्यमश्नुते"। इत्यादिवचनं अथवा एक एव पाशुपत्याख्यो ऽर्थः। बहून्वरान्वरीतुं लब्धुं कथं शक्यते लब्धस्य च पुनर्लाभवरणासम्भवात् अतः पाशुपत्यवरणप्रतिपादनपराणि वाक्यानि। प्रजापतिरात्मनो वपामुत्खिदत्। इति वाक्यवदसन्तमेवार्थं अभिदधातीति गुणवाद एवाङ्गीकरणीय इति भावः॥ ९१॥

स्थिरेभिरङ्गैः पुरुरूप उग्रः इति श्रुतेस्तात्पर्यमाह—

अङ्गैस्स्थिरेभिरिति रूपमनश्वरन्ते
भूरीणि तानि च भुजङ्गममालभारिन्।
मन्त्रेण चान्तरिति युष्मदुपासकाना-
मार्ग्वैदिका यदशनं तदमोघमाहुः॥ ९२॥

हे भुजङ्गममालभारिन् भुजङ्गस्रग्धर। मालभारिन्। इत्यत्र मालाशब्दस्य। "इष्टकेषिकामालानां चिततूलभारिषु" इति। भारिशब्दे परे ह्रस्वत्वं "स्थिरेभिरङ्गैः"। इति श्रुत्या ते अनश्वरं रूपं तानि च रूपाणि भूरीणीति आर्ग्वैदिकाः ऋग्वेदमधीयानाः आहुः। स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुश्शुक्रेभिः पिपिशे हिरण्यैः"। इति। हिरण्यैः हिरण्मयैः स्थिरेभिः अनश्वरैः शुक्रे-

भिः निर्मलैः निर्मलत्वादेवानश्वरादिमत्त्वं प्राकृतानां मलमायादिमत्वादेव नश्वरत्वं तस्मादप्राकृतानीश्वरशरीराणि तादृशैरङ्गैः ईश्वरः पुरुरूपः बहुरूपः बभ्रूः बहुवर्णः उग्रः परैरनभिभवनीयः पिपिशे प्रकाशत इति तस्यार्थः। ईश्वरोपासकानामुपासनोपाधिकशरीरधारणनिबन्धनत्वादमोघान्नसिद्धिप्रतिपादिकायाः। "अन्तरिच्छन्ति"। इति श्रुतेस्तात्पर्यमाह मन्त्रेणेति यदशनं भक्ष्यभोज्यलेह्यचोष्यात्मकं तत् अन्तरिति मन्त्रेण युष्मदुपासकानां मोघमाहुः स च मन्त्रसंहितायामेवाम्नातः। "अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया गृह्णन्ति जिह्वया ससम्"। इति। अन्तः हृदयाकाशे इच्छन्ति अन्विच्छन्ति उपासते जने जनेषु परः परं विभक्तिव्यत्ययः परस्मात् स्थितं सर्वोत्कृष्टं रुद्रं मनीषया बुद्धिपूर्वकं गृह्णन्ति उपासते ससं सस्यविकारभूदं अन्नं अयमर्थः। ये नाम जनेषु मध्ये सर्वस्मादधिकं रुद्रमीश्वरं बुद्धिपूर्वकं हृदयाकाशे स्थिततया उपासते त एवान्नमश्नन्ति। इति ॥ ९२ ॥

आन्तराराधनं बहिराराधनस्य पूर्वाङ्गत्वात्तस्याप्युपलक्षणमित्ययमेव मन्त्रः प्रागेव भोजनादभ्यर्चनप्रतिज्ञाप्रतिपादिकायाः शिवधर्मसूक्तेः। "वरं प्राणपरित्यागः छेदनं शिरसो ऽपि वा। न त्वनभ्यर्च्य भुञ्जीयाद्भगवन्तं त्रिलोचनम्"। इति। इदमेवास्या मूलमित्याह—

**भावोपपन्नमनसां त्वदुपासकानां**
**पुंसाममोघमशनं भगवन्ब्रुवाणः।**

मन्त्रोऽयमन्तरिति नः प्रतिभातिमूलं
प्राग्भुक्तमर्चनविधेरनुवासरं ते ॥ ९३ ॥

हे भगवन् भावोपपन्नमनसां तात्पर्ययुक्तान्तरङ्गाणां पुंसां अमोघमशनं ब्रुवाणः। अन्तरित्ययं मन्त्रः अनुवासरं प्रतिदिनं भोजनात्प्राक्त भवतः अचनविधेः अर्चनविधायिकायाः। "वरं प्राणपरित्यागः"। इति शिवधर्मसूक्तेः मूलं नः प्रतिभाति ॥ ९३ ॥

ऋङ्मन्त्रप्रयोगात्। "यज्ञैस्संमिश्लाः"। इति मन्त्रे भरतशब्दस्येश्वरप्रवृत्तौ निमित्तमाह—

नाथ त्वया पितृमतो मरुतस्तुवाना-
स्त्वामामनन्ति भरतं नटनाभियोगात्।
वैशेषिके सति खलु व्यपदेशहेतौ
साधारणेन भरणेन न कश्चिदर्थः ॥ ९४ ॥

हे नाथ त्वया पितृमतः मरुतः स्तुवानाः बह्वृचः नटनाभियोगात् नटनसम्बंधात् त्वाम्। "यज्ञैस्संमिश्लाः"। इति मन्त्रे भरतमामनन्ति स च मन्त्रः संहितायामाम्नातः "यज्ञैस्संमिश्लाः पृषतीभिर्ऋष्टिभिर्यामच्छुभ्रासो ऽञ्जिषु प्रिया उत। आसाद्य बर्हिर्भरतस्य सूनवः पौत्रादासोमं पिबत दिवो नरः"। इति। यज्ञैः यज्ञेषु। "सुपां सुलुक्"। इति विभक्तिव्यत्ययः संमिश्लाः सम्भूय वर्तमानाः रलयोरभेदः पृषतीभिः नानावर्णाभिः ऋष्टिभिः शक्तिभिः

यामन् यात्रायां शुभ्रासः शोभनगमनाः अंजिषु आभरणेषु प्रियाः उत अपि च आसाद्य आगत्य बर्हिः यज्ञं भरतस्य सूनवः मरुतः पौत्रात् पौत्रचमसात् आसोमं पोत्रचमससंभृतं सोमं पिबत दिवः द्योतमानाः नरः शूराः। अयमर्थः। हे मरुतः शूराः द्योतमानाः यज्ञेषु संभूय वर्तमानां नानावर्णैः आयुधविशेषैः उपलक्षिताः यात्रायां शोभनगमनाः प्रियालंकाराः भरतस्य सूनवः यूयं इमं यज्ञं आसाद्य आगत्य पोत्रचमससंभृतं सोमं पिबत। इति भरतस्य सूनवः इति प्रायेण शोभमानाः प्रियालंकाराश्च भवन्तीति शोभनगमनत्वादिकं भरतसूनुत्वात् तेषामुपपन्नमिति भावः भरतशब्दो नर्तकवचनः आहुश्च नैघंटुकाः। "जायाजीवश्च भरतो नटो नटी स्यात्"। इति ननु। "अग्ने महां असि ब्राह्मण भारत"। इत्यत्र भरणशब्दप्रयोगात् अग्नौ भरतशब्दः तद्वदत्रापि किं न स्यात् अत आह वैशेषिक इति वैशेषिके असाधारणे व्यपदेशहेतौ सति साधारणेन भरणेन न कश्चिदर्थः किंचिदपि प्रयोजनं नास्तत्यार्थः अग्नावपि न भरणशब्दमात्रेण भरतशब्दव्यपदेशः किंत्वसाधारणेन हविर्भरणेन। "एष हि देवेभ्यो हव्यं भरत"। इति। भारतेत्यत्र वृद्धिच्छादसः ॥९४॥

अग्निमारुतशस्त्रे वक्तव्यम्। "आते पितः"। इति रुद्रदैवताकं मन्त्रमधिकृत्यान्मातस्य। त्वन्नो वीरो अर्वति क्षमेथा इति ब्रूयान्नाभिन इत्यनभिमानको ह्यैष देवः प्रजा भवति प्रजा-

येमहि रुद्रीयप्रजाभिरिति ब्रूयान्नरुद्रेत्येतस्यैव नाम्नः परिहृत्यै। इति बह्वृचब्राह्मणवाक्यास्य तात्पर्यं श्लोकद्वयेनाह—

हिंसाप्रतीतिरभिमानपदैकदेशा-
च्छब्दादभेरिति भयेन सुमुद्वपन्ति।
कामान्तकत्रिपुरदक्षमखादिभंग
विख्यातविक्रमतया कथितो ऽसि वीरः ॥९५॥

अस्ति हिंसा वाचको ऽप्यभिमानशब्दः। विश्वरूपं त्वां द्रष्टुमभ्यमंस्त। इत्यादौ तत्प्रतीतेः अभिमानशब्दादपि भयं भवति यथोक्त दशग्रीवं प्रति रामभद्रभीतेन मारीचेन। "रकारादीनि नामानि त्रासं सजनयंति मे। रत्नानि च रथाश्चैव"। इति। एतादृशत्वाद्भीतेः अत्राप्यभिमानपदस्य हिंसावाचकस्य एकदेशात् अभेरिति शब्दाद्धिंसाप्रतीतिरिरिती भयेन। अभिनो वीरो अर्वति क्षमेत। इत्यत्र अभिशब्दमुद्वपन्ति उद्धरन्ति तत्स्थाने। त्वन्नः। इति पदं आवपंति। "आते पितः" इति मंत्रे वीरशब्दस्येश्वरप्रवृत्तौ निमित्तमाह कामेति कामान्तकत्रिपुरदक्षमखादिभंगविख्यातविक्रमतया आदिशब्देन अंधकजलंधराश्चय उच्यन्ते मन्मथमृत्युत्रिपुरदक्षयागादिनां भंगेन प्रसिद्धविक्रमतया वीरः कथितो ऽसि ॥ ९९ ॥

हिंसाभिधातृपदसन्निधिना ज्वरार्त्थे
रुद्रेति नाम परिशंक्य परावपन्तः।

**मंत्रे यथान इति मङ्गळवाचि दृष्ट-**
**न्देवेश रुद्रिय पदं पुनरावपंति ॥ ९६ ॥**

हिंसाभिधातृपदसन्निधिना हिंसावाचकाभिशब्दसान्निध्येन रुद्रेति नाम प्रजायेमहि रुद्र प्रजाभिः । इत्यत्र रुद्रशब्दं ज्वरार्थं ज्वरवाचकं परिशंक्य परावपन्तः उद्धरंतः "यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे यथातोकायरुद्रियम्"। इति पदं पुनरावपान्ति स च। "आतेपितः" इति मन्त्रसंहितायामाम्नायते । "आते पितर्मरुतां सुम्नमेतु मानस्सूर्यस्य संदृशो युयोथाः । अभिनो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः" इति मरुतां देवानां पितः हे रुद्र ते तव सुम्नं सुखं एतु अगच्छतु नः अस्माकं सूर्यस्य संदृशः सूर्यावलोकनां मा युयोथाः मा वियोजय किंच हे वीर त्वं नः अस्माकं अर्वति अश्वादिवस्तु अभिप्रेतमेतत् क्षमेत क्षमेथा इति वर्णव्यत्ययः सहिष्णुर्भूत्वा अस्मदीयानि अश्वादिवस्तूनि मा विनाशयेत्यर्थः हे रुद्र त्वदनुज्ञाया वयं प्रजाभिः प्रजायेमाहि पुत्रपौत्रादिरूपेण उत्पद्येमहि इति ब्राह्मणवाक्यस्याप्ययमेवार्थः त्वन्नोवीर इति पाठादभिशंसिता ब्रूयात् अदभिन इति पाठन्नब्रूयात् त्वन्नो वीर इति पाटे एष देवः प्रजा अनभिमानको भवति अभिमानको हि हन्ता पाटान्तरे अभिशब्दस्य विद्यमानत्वात् पुत्रदिकाः प्रजा अभिक्ष्यनाशयिष्यामीति रुद्रे मनुते त्वन्न इति पाठे तु न तथे-

त्यर्थः प्रजायेमहि रुद्रियेत्येव पाठं ब्रूयात् न तु रुद्रेति हे रुद्रीयमङ्गलस्वरूप इत्येतस्यैव रुद्रनाम्न उग्रशब्दपर्यायस्य परिहाराय रुद्रियेति पाठान्तरं इति ॥ ९६ ॥

सामवेदोक्तमीश्वरस्यानुभावं तत्पार्षदानां चानुभावं दर्शयति।

शाखासु शंकर सहस्रतयीषु साम्ना-
माम्नायते तव न केवलमानुभावः ।
सर्वात्मनामधिपतेरविशेषतस्ते
देवव्रतादिषु गणाः कथितानुभावाः ॥ ९७ ॥

हे शंकर सहस्रतयीषु सहस्रावयवासु साम्नां शाखासु तवानुभावो महिमा न केवलमाम्नायते न कथ्यते किंतु अविशेषतः सर्वात्मनामधिपतेः । "अधिपातायि मित्रापातायि ज्वलापातायि सुवः" । इत्यनेनाविशेषेण श्रवणात् सर्वेषामधिपतेः ते गणाः प्रमथाः। "ये देवा दिविषदस्थ"। इत्यादिषु देवव्रतादिषु कथितानुभावाः । तथा च पुराणवचनम् " ते हि साक्षाद्दिविषदस्त्वन्तरिक्षसदस्ततः । प्रथिवीषद इत्येवं देवा देवव्रतैस्तुताः"। इति । यानधिकृत्य महाभारते श्रूयते " शूलहस्ताः स्वङ्गहस्तास्सर्पोच्छ्रितकिरीटिनः । महासर्पाङ्गदधराश्चित्राभरणधारिणः । रजोध्वस्ताः पंकदिग्धाः सर्वे चित्रांबरस्रजः । नीलांगाः कमलांगाश्च मुण्डवक्त्रास्तथैव च। भेरीशंखमृदंगांस्ते झर्झर्यानकगोमुखान् । अवादयन्पारिषदास्संहृष्टाः कनकप्रभाः। गायमाना-

स्तथान्ये च संहृष्टाः पुरुषर्षभाः। लंघयन्तः प्लवन्तश्च वल्गंतश्च महाबलाः। धावन्तो जवनाश्चण्डा पवनोद्धूतमूर्द्धजाः। मत्ता इव महानागा विवदन्तो मुहुर्मुहुः। सुभीमा घोररूपाश्च शूलपट्टसपाणयः। चीरांगवसनाश्चित्राश्चित्रमाल्यानुलेपनाः। रत्नचित्रांगदधराः समुद्यतकरास्तथा। हंतारो द्विषतां संघं प्रसह्यासह्यविक्रमाः। पातारो ऽसृग्वसानां च मांसार्द्रकृतभोजनाः। चूडालकर्णिकाराश्च प्रकृशा कंदरोदराः। अतिह्रस्वातिदीर्घाश्च प्रलंबाश्चातिभैरवाः। कामकारकरास्सिद्धास्त्रैलोक्यस्येश्वरेश्वराः। नित्यानंदाः प्रमुदिता वागीशा वीतमत्सराः। प्राप्याष्टगुणमैश्वर्यं ये न यान्ति च विस्मयम्। येषां विस्मयते नित्यं कर्मभिर्भगवान्भवः। मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान्। पिबन्तो ऽसृग्रसानन्ये क्रुद्धा ब्रह्मद्विषां सदा। चतुर्विंशात्मकं सोमं ये पिबन्ति च नित्यशः। श्रुतेन ब्रह्मचर्येण तपसा च दमेन च। ये समासाद्य शूलाङ्कं भवसायुज्यमागताः। यैराप्तभूतैर्भगवान् पार्वत्या च महेश्वरः। सहभूतगणो भुङ्क्ते भूतभव्यभवप्रभुः"। इति। तथा च लैंगे ऽपि। "स्मरणादेव रुद्रस्य संप्राप्ताश्च गणेश्वराः। सर्वे सहस्रहस्ताश्च सहस्रायुधपाणयः। त्रिणेत्राश्च महात्मानस्त्रिदशैरपि वंदिताः। कोटिकालाग्निसंकाशा जटामकुटधारिणाः। दंष्ट्राकरांळवदना नित्यबुद्धाश्च निर्मलाः। कोटिकोटिगणैस्तुल्यैरात्मना च गणेश्वराः। असंख्याता महात्मनस्तत्राजग्मुर्मुदा युताः। गायन्तश्च द्रवन्तश्च नृत्यन्तश्च महाबलाः। मुखाडंबरवाद्यानि वाद-

यन्तस्तथैव च । रथैर्नागैर्हयैश्चैव वायुमर्कटवाहनाः । विमानेषु तथारूढा हेमचित्रेषु वै गणाः । भेरीमृदंगमस्त्रैश्च पणवानकगोमुखैः । वादित्रैर्विविधैश्चान्यैः पटहैः केकपुष्करैः । भेरीमुरजसन्नादैराडंबटकडिण्डिमैः । मर्दळैर्वेणुवीणाभिर्विविधैः पणवैरपि । दर्दरैस्तलघातैश्च कळवैः पणवैरपि । वाद्यमानैर्महायोगा ह्याजग्मुर्देवसंसदम् । ते गणेशा महासत्वास्सर्वदेवेश्वरम् । प्रणम्य देवं देवीं च इदं वचनमब्रुवन् । भगवन्देव देवेश त्र्यंबक वृषध्वज । किमर्थं च स्मृता देव ह्याज्ञापय महाद्युते । किं सागरं शोषयामो यमं वा सह किंकरम् । हन्म मृत्युमुतामृत्युं पीठवर्द्धनपंकजम् । बध्वेंद्रं सहदेवैश्च सहविष्णुं सनातनम् । आनयामोथ संक्रुद्धा दैत्यान्वासहदानवैः । कस्याद्य व्यसनं घोरं करिष्यामस्तवाज्ञया । कस्य वाद्योत्सवं देव सर्वकामसमन्वितम् । तांस्थता वादिनस्सर्वान्गणेशान्भवसंमतान् । उवाच देवस्संपूज्य कोटिकोटिशतान्प्रभुः । शृणुध्वं यत्कृते यूयमिहाहूता जगद्धिताः । श्रुत्वा च प्रयतात्मानः कुरुध्वं तदशंकिताः। नंदीश्वरो ऽयं पुत्रो नस्सर्वेषामीश्वरेश्वरः। प्रियो ऽग्रनायकश्चैव सेनानीर्वस्समृद्धिमान् । तमिमं मम संदेशाद्यूयं सर्वे च संस्मृताः । सेनान्यमभिषिंचन्तु महायोगपतिः परम् । एवमुक्ता भगवता गणपास्सर्व एव ते । एवमस्त्विति संमन्त्र्य संभारानाहरंस्ततः । तस्य संप्रश्रयं दिव्यं जांभूनदमयं शुभम् । आसनं मेरुसंकाशं मनोहरमुपाहरन् । शातकुंभमयञ्चापि चारुचामीकरप्रभम् । मुक्तादामावलंबं च मणिरत्नावभासितम् । स्तंभैश्च

वैडूर्यमयैः किंकिणीजालसंयुतम्। चतुरश्रसमायुक्तं मण्डपं विश्वतोमुखम्। कृत्वा चक्रं च तन्मध्ये दत्वासनवरं शुभम्। तस्याग्रतः पादपीठं नीलवज्रावभासितम्। चक्रुः पादप्रतिष्ठार्त्थं कलशौतस्यपार्श्वगौ। संपूर्णौ परमांभोभिररविंदामृताननौ। कलशानां सहस्रं च सौवर्णं राजतं तथा। ताम्रंच रजतं चैव सर्वतीर्त्थांबुपूरितम्। छत्रं शतशलाकं च जांबूनदमयं शुभम्। शंखहारांबुगौरेण पृष्ठेन च विराजितम्। व्यजनं चंद्रशुभ्रं च हेमदंण्डं सुचामरम्। ऐरावतं सुप्रतीकं गजावन्तौ च पूजितौ। मकुटं कांचनश्चैव निर्मितम् विश्वकर्मणा। कुण्डले चामरे दिव्ये वज्रं चैव वरायुधम्। जांबूनदमयं सूत्रं केयूरद्वयमेव च। हारं च मणिचित्रांगं निर्मितं विश्वकर्मणा। संभाराणि तथान्यानि विविधानि बहून्यपि। समंतान्निन्युरव्यग्रा गणपा देवसंहताः। ततो देवास्सहेन्द्राश्च स नारायणकास्तथा। मुनयो भगवान् ब्रह्मा नव ब्राह्मण एव च। देवैश्च लोकास्सर्वैस्ते तत्राजग्मुर्मुदा युताः। तेष्वागतेषु देवेषु भगवान् परमेश्वरः। सर्वकार्यविधिं कर्तुमादिदेश पितामहम्।पितामहोऽपि भगवान्नियोगादेव तस्य तु। चकार सर्वं भगवानभिषेकं समाहितः। अर्चयित्वा ततो ब्रह्मा स्वयमेवाभिषिच्य तम्। ततो विष्णुस्ततश्शक्र ऋषयश्च सहामरैः। वासोयुगं तथा दिव्यं चित्रपट्टपरिष्कृतम्। केयूरं कुण्डलं चैव मकुटं हारमेव च। छत्रं शतशलाकं च वालव्यजनमेव च। दत्तं महात्मना तेन ब्रह्मणा परमेष्ठिना। ऋषयस्तुष्टुवुश्चैनं पितामहपुरोगमाः। स्तुतवत्सु ततस्तेषु विष्णु-

स्सर्वजगत्पतिः । शिरस्यंजलिमाधाय तुष्टाव च समाहितः । प्रांजलिः प्रयतो भूत्वा जयशब्दं चकार ह । ततो गणाधिपास्सर्वे ह्येते देवास्सहासुराः । एवं स्तुतश्चाभिषिक्तो देवैस्संब्रह्मकैस्तदा । उद्वाहश्च कृतस्तत्र नियोगात्परमेष्ठिनः । मरुतां च सुता देवी सुयशाख्या बभूव ह । लब्धं शशिप्रभं छत्रं तया रत्नविभूषितम् । चामरे चामरव्यग्रहस्ताग्रस्त्रीगणावृता । सिंह्मासनं च परमं तया चाधिष्ठितं मया । अलंकृता महालक्ष्म्या मकुटाद्यैर्विभूषणैः । लब्धं च हारं परमं देव्याः कण्ठगतन्तथा । वृषेंद्रश्च सितं मागं सिंह्मं सिंह्मध्वजं तथा । रथं च हेमहारं च चंद्रबिंबसमप्रभम् । अद्यापि सदृशः कश्चित्क्वचिन्नासादितः पुनः । सान्वंय च गृहीत्वेशस्तथा संबंधबांधवैः । आरुह्य वृषमीशानः मायये(व्या गतश्शिवः । तदादिवैभवं द्रष्टुं मया च प्रार्थयन्गणैः। मुनिदेवर्षिसिद्धाश्च आज्ञां पशुपतेर्द्विज । अथाज्ञां प्रददौ तेषां प्रसन्नात्मा विभुर्हरः । तस्माद्धि मुनयो लब्ध्वा तदाज्ञां मुनिपुंगव । भव भक्तस्ततश्चासंस्तस्माद्देवं समर्चयेत्" । इति ॥ ९७ ॥

ईश्वरकुमारयोस्कंदविनायकयोः आनुभावातिशयं सामविधिब्राह्मणोक्तं दर्शयति—

स्कंदं विनायकमुभावपि ते कुमारौ
सर्वैर्गुणैः पितरमेव निदर्शयन्तौ ।

सामोपगायमुपगायमृचां गणेषु
संप्रीणयन्ति शिव सामविधौ यतोक्तम् ॥९८॥

हे शिव सर्वैर्गुणैः पितरमेव निदर्शयन्तौ अनुकुर्वन्तौ स्कंदं विनायकमिति उभावपि ते कुमारौ ऋचां गणेषु संप्रीणयन्ति यतोक्तं सामविधौ। "जुषाणास आत्मन" इति वर्गाः मृज्यमानं स्वहस्तेति प्रथमं षष्ठमिति चैषा वैनायकी संहिता एतां प्रयुञ्जन्विनायकं प्रीणाति। इति। "आमन्द्रैरिंद्रहरिभिरानोविश्वासुहव्यं प्रसेनानि" रिति वर्गाः पविलन्त इति द्वे एषा स्कंदस्य संहिता एतां प्रयुंजन् स्कंदं प्रीणयति। इति। विनायकस्योत्पत्तिरानुभावश्च। लैंगे श्रूयते। "प्रणम्य चाह वाक्पतिः पतिं निरीक्ष्य निर्भयः सुरेतरादिभिस्सदा विविघ्नमर्च्यते भवान्। समस्तकर्म सिद्धये सुरापकारकारिभिस्ततः प्रदेहि चांगजं विविघ्नकर्मकारकम्॥ ततस्तदा निशम्य वै विनाकधृक्सुरेश्वरः सुरापकारिणां द्विषां वधाय भीमविग्रहम्। दया रतां स्पृशन्प्रियामुपादिशद्यथा वपुः सुरेश्वरी सुभैरवं पपुर्दधार सा च वै॥ गणेश्वराश्च तुष्टुवुस्सुरेश्वरा महेश्वरं समस्तलोकसंभवं भवं भवार्तिहारिणम्। उभौ तदा त्विभाननौ स्वविग्रहात्तदा भवः प्रविश्य तेजसा प्रियां बहिस्थितो गजाननः॥ इभाननं त्विमानना त्रिशूलधारिणं गता ससर्ज लोकसंभवं गजाकृतिं तदांबिका। ततः पुष्पवृष्टिं च सिद्धा मुनींद्रास्तदा खेचरा देवसंघा ववर्षुः। तदा तुष्टुवुः खेचरास्ता-

न्प्रणेमुः गणेशं महेशं महेशप्रियां च ॥ तया धृतः क्षणं तनै सुभैरवस्सुमूर्तिमान् स्थितो ननर्त बालकस्समस्तमंगळालयः। विचित्रवस्त्रभूषणैरलंकृतो गजाननः गिरा विचित्रवर्णया स्तुवन् तदा पदांबुजे ॥ महेश्वरस्य पुत्रकोऽभिवंद्य वंद्य चांबिकाम्" इत्यादि । अपिच । जातमात्रं सुतं दृष्ट्वा चकार भगवान्भवः । गजाननाय कृत्यांस्तु सर्वान्सर्वेश्वरस्स्वयम् । आलिंग्याघ्राय च सुतं महादेवो जगद्गुरुः । तवाकारो हि दैत्यानां विनाशाय ममात्मज ॥ देवानामुपकारार्थं द्विजानां ब्रह्मवादिनाम् । यज्ञस्तु दक्षिणाहीनः कृतो येन महीतले । तस्य धर्मस्य विघ्नं च कुरु स्वर्गपदस्थितः । अध्यापनं चाध्ययनं व्याख्याश्रवणमेव च । यो न्यायतः करोत्यस्मिन् तस्य प्राणान्सदा भर । त्वां गन्धपुष्पधूपाद्यैरनभ्यर्च्य जगत्त्रये । देवैरपि तथान्यैश्च लब्धव्यं नास्ति पुत्रक । ये हरिं चैव मां चापि शक्राद्यांश्च सुरानपि । विघ्नैर्बाधय चाग्रे त्वां नार्चयन्ति फलार्थिनः । तथेश्वरस्सर्वगणैर्गणेशं भक्ष्यैश्च भोज्यैस्सुरसैस्सुगन्धैः । आलिङ्ग्य चा घ्राय सुतं तदानीमपूजयत्सर्वसुरेन्द्रमुख्यः । संपूज्य पूज्यं सह देवसंघै र्विनायकं नायकमीश्वराणाम् । गणेश्वरैरेव तदाद्रिधन्वा पुरत्रयं दग्धुमसौ जगाम" । इति ॥ ९८ ॥

सर्वेतरदेवतापरित्यागेन शिवैकविषयं ध्यानं निश्रेयसहेतुतयैवोपदिशतो अथर्ववेदस्याभिप्रायमाह—

ब्रह्मादिकं सकलमन्यदपोह्य पुंसां
ध्यातव्यमेकमभिधाय शिवंकरं त्वाम् ।
वक्तव्यमन्यदनपेक्ष्य विमोक्षहेतु-
माथर्वणः परिसमाप्तिमुवाच वेदः ॥ ९९ ॥

हे शंकर आथर्वणो वेदः अन्यत् ब्रह्मादिकं सकलं देवताजातं अपोह्य परित्यज्य पुंसां ध्यातव्यं शिवंकरं त्वां एकं वक्तव्यं अन्यत् त्वद्ध्यानव्यतिरिक्तमन्यत् अनपेक्ष्य विमोक्षहेतुं मोक्षसाधनमभिधाय परिसमाप्तिमुवाच ब्रह्मविष्णवादीनां ध्यानप्रसक्तौ। "ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते न कारणाम्"। इति ब्रह्मादीनां ईश्वरशक्तित्वात् कार्यत्वाभिधानेन तेषां ध्यातव्यत्वं निराकृत्य। "कारणं तु ध्येयः सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्शम्भुः"। इति। इश्वरस्य ध्यातव्यत्वमभिधाय। "समाप्ताथर्वशिखा"। इति समाप्तेति भावः। तथा च पुराणवचनम्। "सर्वमेतत्परित्यज्य शिव एव शिवङ्करः। परो ध्येयो महादेवस्समाप्ताथर्वणी श्रुतिः"। इति। तथा च स्कान्दे काळिकाखण्डे। "तव भृङ्गिमुने सम्यगुपायं तु वदाम्यहम्। सर्वान्देवान् परित्यज्य शरणं भज शङ्करम्। प्रदक्षिणं च तस्यैव कुरु कार्यार्थमाप्स्यसि। समस्ततीर्थस्थालानि शिवस्थानानि ते मुने। तत्प्रदक्षिणतस्तीर्थयात्राफलमवाप्स्यते। बहुनात्र किमुक्तेन शिववाक्यप्रमाणतः। शिवप्रदक्षिणादेव ज्ञानं मोक्षं च लभ्यते। सर्वान्देवान्परित्यज्य गन्तव्यश्शरणं

शिवः। इत्यथर्वश्रुतिः प्राह तत्कुरु त्वं प्रदक्षिणम्। उपदिष्टो मयार्थोऽयं त्रिर्वाचा त्वं प्रदक्षिणम्। कुरुष्व सर्वदेवांश्च परित्यज्य शिवं भज"। इति ॥ ९९ ॥

महेश्वरधर्मपत्न्या यजुर्वेदोक्तमानुभावं श्लोकद्वयेनाह—

**यामामनन्ति तव शंकर धर्मदारा-**
**नध्वर्यवस्सहजसिद्धतया स्वसारम्।**
**आथर्वणा यदुपसृष्टतया भवन्त-**
**न्ध्यातव्यमाहुरपहाय पितामहादीन्॥ १०० ॥**

हे शङ्कर अध्वर्यवः यजुर्वेदविदः। "अध्वर्यूद्गातृहोतारो यजुस्सामर्ग्विदः क्रमात्"। इत्यमरः। तव धर्मदारान् धर्मपत्नीं दारशब्दो नित्यपुल्लिङ्गो बहुवचनान्तश्च स्वसृशब्दसमाविष्टांयां शिवां परमेश्वरस्य निष्कळसकळभावेऽपि सहजसिद्धतया स्वभावसिद्धतया नित्यसमवेततया च स्वसारमामनन्ति तथा च यजुषि। "प्रति पूरुषमेककपालं निर्वपति"। इत्यादौ "आखुस्ते रुद्र पशुस्तं जुषस्वैषते रुद्रभागस्सह स्वस्राम्बिकयातं जुषस्व"। इति। हे रुद्र आखुः खनु अवदारणे। महीं महीधरादिना खनतीत्याखुः वराहः पारंपर्येण महावराहो विष्णुरित्यर्थः। ते पशुः तं जुषस्व स्वस्रा अम्बिकया सह हे रुद्र ते एष पशुः भागः इति श्रुतेरर्थः कैरातमीश्वरेत्यत्र वेषानुरूपमनुसन्धेयं वेदरहस्य एवायमर्थः न पशुर्वेद्यो लैकिक इत्यर्थः। तथा हि। "देवा यद्यज्ञं

तन्वानाः अबध्नन्पुरुषं पशुं तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः तेन देवा अयजन्त साध्याया ऋषयश्च ये"। देवाः ब्रह्मादयः यष्टारः यज्ञं ईश्वरपूजां तन्वानाः पुरुषं विष्णुं पशुं बध्नन् अग्रतो जातं यज्ञपुरुषं विष्णुं बर्हिषि यज्ञे आलम्भनार्थं प्रौक्षन् तेन ऋषयः साध्याश्च देवाश्च अध्वरराजानं महेश्वरं अयजन्त। इति कथं तद्यज्ञं पुरुषमिति प्रतिसन्धानात्। "यज्ञो वै विष्णुः" इतिश्रुतेः। यज देवपूजायां देवशिशवः यजेर्णिञि यज्ञाः क्रियाः यज्ञपुरुषो विष्णुः पशुरूपेण यज्ञोपकरणं न क्रिया देवा ब्रह्मादयो यष्टारः यज्ञोपकरणानि विष्णुप्रभृतयः यज्ञः क्रिया तया सन्तोषणीयः महेश्वरः अपि च आलम्भनार्थं प्रोक्ष्यमाणस्य बर्हिरूपस्य पशोः। "न ग्राम्यान् पशून् हिनस्ति नारण्यान्"। इति श्रुतिप्रकारेण न ग्राम्यादनारण्यस्यावश्यं पशुपतये निवेद्यमानस्य सिद्धेः। "इमं पशुं पशुपते ते अद्य"। इति। "पशुना रुद्रं यजत"। इति किल विधिः। एवं "यज्ञेन यज्ञमयजन्त देवाः"। इत्यत्रापि देवाः यजनक्रियाकर्तारः यज्ञोपकरणभूतेन विष्णुना पशुना यज्ञमयजन्त महेश्वरस्य पूजाक्रियां निर्वर्तयन्त इत्यर्थः। "यथाविधिं विभक्त" इत्यत्र विकरोतीत्यर्थः नान्यार्थः अन्यथा स्वेन स्वयजनं अत्यन्तहासकरत्वात् न सङ्घाघटीति कथम्। "यज्ञो वै विष्णुः"। इत्युच्यते विष्णुस्स्वयं न क्रिया तस्य द्रव्यरूपत्वात् किं तर्हि यज्ञोपकरणत्वादुपचरितयज्ञनामा हरिः अतस्मिंस्तद्भाव उपचारः। "प्रणावा आपः"। इत्यत्र

प्राणसाधनत्वादपां तन्नामता इत्यलमतिप्रसङ्गेन आथर्वणा इति। अथर्वशिरसि। "अथ कस्मादुच्यते ईशानः"। इति। "यस्सर्वान्लोकानीशत ईशानीभिः जननीभिः परमशक्तिभिः अभित्वा शूरणो नुमो ऽदुग्धा इव धेनवः ईशानमस्य जगतःस्वर्दृशमिन्द्र-तस्थुषः तस्मादुच्यते ईशानः"। इत्यादयः आथर्वणाः यदुपसृष्ट-तया यया महाशाक्तरूपाम्बिकायुक्ततया पितामहादीनपहाय भवन्तमीशानमेव ध्यातव्यमाहुः कथमीशानीभिरिति बहुवचनम्। "एकैवानेकतां याति शिवशक्तिरुपाधितः"। इति पितामहादि-नपहायेति। अथर्वशिखायां पूर्वास्य मात्रा जागर्ति इत्यारभ्य विष्ण्वादीन् ध्येयानवधूय ध्येयमागत्ये शांप्रथकृत्य ध्ययीते-त्युक्त। ब्रह्मविष्णुरुद्रेन्द्रास्संप्रसूयन्ते"। इत्यारभ्य। "कारणं तु ध्येयस्सर्वैश्वर्यसंपन्नस्सर्वेश्वरश्च शंभुराकाशमध्ये ध्रुवं स्तब्ध्वाधिकं चणमेकं क्रतुशतस्य फलसंपत्तिस्सर्वमन्यत्परित्यज्य"। इति पितामहादीन्परित्यज्येति। सर्वमन्यत्परित्यज्य शिव एव शिवंकरः" इत्यादिकं पूर्वमेवोदाहृतम्॥ १००॥

**एकश्श्रुतो ऽसि परमेश्वर सद्वितीयं**
**मन्त्रा यया व्यपदिशंति पुनःपुनस्त्वाम्।**
**तस्याः प्रभावमतिवाङ्मनसं शिवायाः**
**कार्त्स्न्येन वक्तुमनलं कमलासनो ऽपि ॥१०१॥**

"एक एव रुद्रो न द्वितीयाय तस्थे"। इति। "य एको रुद्र उच्यते"। इत्यादिश्रुतिषु एकश्श्रुतो ऽपि सद्वितीयं शिवाद्वितीयं यस्य तं मंत्राः। "सह स्वस्रांबिकया" "अवांबरुद्रमदिमहि"। "अंबिकापतय उमापतये पशुपतये नमो नमः"। "ईशत ईशनीभिः परमशक्तिभिः"। "परास्य शक्तिर्विविधैव श्रूयते" "ां ब्रह्मविद्यां ब्रह्मयोनिम्"। "ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भम्"। इत्यादिका मंत्राः त्वां यया युक्तं पुनः पुनः व्यपदिशाति अतिवाङ्मनसं वाङ्मनसे अतिक्रांतं शिवायाः प्रभावं कार्त्स्न्येन साकल्येन वक्तुं कमलासनो ऽप्यनलं न समर्थः अपिशब्दस्समुच्चये नरायणो ऽपीत्यर्थः। तदुक्तम्। "यस्याः प्रभावमखिलं भगवाननन्तो ब्रह्मा हरश्च न हि वक्तुमलं बलं च"। इति वक्तुमित्यत्राप्या वृत्यापिशब्दो द्रष्टव्यः वक्तुं मनसा तुलितुमपीत्यर्थः। तथा च वायवीयसंहितायां देव्या अनुभावश्च श्रूयते। ब्रह्माः। "अस्य भक्तिमविज्ञाय प्राकृतं ते निवेदितम्। भक्तश्चेदस्य किं पापैः न ते भक्तः प्रणश्यति। पुण्यकर्मापि किं कुर्यात्त्वदीयज्ञानापेक्षया। आज्ञा प्रज्ञा पुराणी च त्वमेव परमेश्वरी। त्वदधीना हि सर्वेषां बंधमोक्षव्यवस्थितिः। त्वामृते परमां शक्ति संसिद्धिः कस्य कर्मणः। त्वमेव विविधा शक्तिः भावानां भावना स्वयम्। अशक्तः कर्मकरणं कर्ता वा किं करिष्यति। विष्णोश्च मम चान्येषां देवतानां च राक्षसाम् तत्तदैश्वर्यसंप्राप्तेस्तवैवाज्ञा हि कारणम्। अतीताः खल्वसंख्याता ब्रह्मणो हरयो भवाः।

अनागताश्चासंख्यातास्त्वदाज्ञानुविधायिनः। त्वामनाराध्य देवेशि पुरुषार्थचतुष्टयम्। लब्धुं न शक्यते ऽस्माभिरपि सर्वसुरासुरैः। व्यत्यसोऽपि भवेदन्यब्रह्मत्वस्थावरत्वयोः। सुकृतं दुष्कृतं चापि त्वदवस्थापितं यतः। त्वं हि सर्वजगत्कर्तुश्शिवस्य परमात्मनः। अनादिमध्यनिधना शक्तिराद्या सनातनी। समस्तलोकयात्रार्थं मूर्तिमाविश्य कामपि। क्रीडसे विविधैर्भावैः कस्त्वां जानाति तत्वतः। शक्तिराद्या परा शैवी चिद्रूपा परमेश्वरी। शिवो ऽधितिष्ठत्यखिलं यया कारणभूतया। नात्मा नैव च मायैषा न विकारो विचारतः। न बंधो नापि मुक्तिश्च बंधमुक्तिविधायिनी। सर्वैश्वर्यपराकाष्ठा शिवस्याव्यभिचारिणी। समानधर्मिणी तस्य तैस्तैर्भावैरशेषतः। स तयैव गृहीत्वापि तेनैव ग्रहिणी सदा। तयोरपत्यं यत्कार्यं परप्रकृतिकं जगत्। स कर्ता कारणं सेति तयोर्भेदव्यवस्थितिः। अपरा तु परा शक्तिश्शिवस्य समवायिनी। प्रभेव भानोश्चिद्रूपा भिन्नैवेति व्यवस्थितिः। न शिवेन विना शक्तिर्न शक्त्या रहितश्शिवः। शिवो नित्यं शिवा चैव भुक्तौ मुक्तौ च देहिनाम्। यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः। समानधर्मिणीमेव शिवस्य परमात्मनः। यथा न जायते पुत्रः पितरं विना। तथा भवं भवानी च विना नैतच्चराचरम्। एवमुक्तविभूतिर्वै प्रकृती सा परा स्मृता। अप्राकृतीं परामन्यां गुह्यां गुह्यविदो विदुः। यतो वाचो निवर्तंते मनसा चेंद्रियैस्सह। अप्राकृती परा सैषा विभूतिः परमेश्वरी"। इति।

तथा च कूर्मपुराणे। मेना। "पश्य बालामिमां राजन् राजीव-
सदृशप्रभाम्। हिताय सर्वभूतानां जातां च तपसावयोः। सोऽपि
दृष्ट्वा ततः पुत्रीं तरुणादित्यसंनिभाम्। कपर्दिनीं चतुर्वक्त्रां त्रिणेत्राम-
तिलालसाम्। अष्टहस्तां विशालाक्षीं चंद्रावयवभूषणाम्।
निर्गुणां सगुणां साक्षात्सदसद्व्यक्तिवर्जताम्। प्रणम्य शिरसा
भूमौ तेजसा चातिविह्वलः। भीतः कृतांजलिस्तस्याः प्रोवाच
परमेश्वरीम्। का त्वं देवि विशालाक्षि शंकरावयवांकिता। न
जाने त्वामहं वत्से यथावद्ब्रूहि पृच्छते। गिरींद्रवचनं श्रुत्वा
ततस्सा परमेश्वरी। व्यजहार महाशैलं योगिनामभयप्रदा। मां
विद्धि परमां शक्तिं महेश्वरसमाश्रयाम्। अनन्यामव्ययामेकां मां
पश्यन्ति मुमुक्षवः। अहं वै सर्वभावानामात्मा सर्वान्तरा शिवा।
शाश्वतैश्वर्यविज्ञानमूर्तिस्सर्वप्रवर्तिका। अनन्तानंदमहिमा संसारा-
र्णवतारिणी। दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्।
एतावदुक्त्वा विज्ञानं दत्वा हिमवते स्वयम्। स्वरूपं दर्शयामास
दिव्यं तत्पारमैश्वरम्। सूर्यकोटिप्रतीकाशं तेजोबिम्बं निराकुलम्।
ज्वालामालासहस्राढ्यं कालानलशतोपमम्। दंष्ट्राकरालं दुर्द्धर्षं
जटामण्डलमण्डितम्। त्रिशूलवरहस्तं च घोररूपं भयावहम्।
प्रशान्तसौम्यवदनमनन्ताश्चर्यसंयुतम्। चंद्रावयवलक्ष्माणं चंद्रको-
टिसमप्रभम्। किरीटिनं गदाहस्तं नूपुरैरुपशोभितम्। दिव्यमाल्यां-
बरधरं दिव्यगंधानुलेपनम्। शंखचक्रकरं काम्यं त्रिणेत्रं कृत्तिवा-
ससम्। अण्डस्थं चाण्डमध्यस्थं बाह्यमाभ्यन्तरं परम्। सर्वशक्ति-

मयं शुभ्रं सर्वाकारं सनातनम् । ब्रह्मेन्द्रोपेंद्रयोगीन्द्रवंद्यमानपदांबुजम् । सर्वतः पाणिपादं तं सर्वतोक्षिशिरोमुखम् । सर्वमावृत्य तिष्टंतं ददर्श परमेश्वरं दृष्ट्वा तदैश्वरं रूपं देव्या माहेश्वरं परम् । भयेन च समाविष्टस्स राजा हृष्टमानसः । आत्मन्याधाय चात्मानमोंकारं समनुस्मरन् । स्तुत्वा नाम्नां सहस्रेण देवीं तां परमेश्वरीम् । भूयः प्रणम्य भूतात्मा प्रोवाचेयं कृतांजलिः । यदेतदैश्वरं रूपं घोरं ते परमेश्वरि । भीतो ऽस्मि सांप्रतं दृष्ट्वा रूपमन्यत्प्रदर्शय । एवमुक्ता तु सा देवी तेन शैलेन पार्वती । संश्रुत्य दर्शयामास स्वरूपं परमं पुनः । नीलोत्पलदळप्रख्यं नीलोत्पलसुगंधिकम् । द्विनेत्रं द्विभुजं सौम्यं नीलाळकविभूषितम् । रक्तपादांबुजतलं सुरक्तकरपंकजम् । श्रीमद्विशालसद्वृत्तललाटतिलकोज्वलम् । भूषितं चारुसर्वांगं भूषणैरतिकोमळम् । दधानुमुरसा मालां विशालां हेमनिर्मिताम् । ईषत्स्मितं सुबिंबोष्टं नूपुरारवसंश्रितम् । प्रसन्नवदनं दिव्यमनंतमहिमास्पदम् । तदीदृशं समालोक्य स्वरूपं शैलसत्तमम् । भीतिं संत्यज्य हृष्टात्मा बभाषे परमेश्वरीम् । ज्ञानेन कर्मयोगेन भक्तियोगेन वा नृप । सर्वसंसारमुक्त्यर्थमीश्वरं सततं श्रय" । इत्यादि ॥ १०१ ॥

"एकवक्त्रं त्रिणयनं शुद्धस्फटिकसन्निभम् । अधः कराब्जद्वितये बिभ्राणमभयं परम् । ऊर्ध्वहस्ताब्जयुगळे शूलं परशुकं क्रमात्" । इत्यादिशिवागमोक्तध्यानप्रकारमाह—

एकं मुखं त्रितयमीश्वर लोचनानां च
चत्वारि दोंषि विशदं वपुरद्भुतं ते ।
नित्यं तदव भजतामुपकारहेतो-
र्नाना भवंति तनवस्तव दिव्यरूपाः ॥ १०२ ॥

एकं मुखं नयनानां त्रितयं चत्वारि दोंषि बाहवः त्रिशदं निर्मलं शुद्धस्फटिकसन्निभं अद्भुतमाश्चर्यभूतं वपुरस्ति तदेव तव सगुणस्य ते नित्यं स्वाभाविकं अनश्वरं रूपं निर्गुणस्य शरीराभावात् भजतामुपकारहेतोः उपकाराय। "षष्ठि हेतुप्रयोगे"। इति षष्ठी। दिव्यरूपाः जरामरणरहिताः नाना बहवः तनवः तव भवन्ति। तत्र श्रुतिः। "स्थिरेभिरंगैः पुरुरूपउग्रः। इति ॥ १०२ ॥

स्वशक्त्या परमेश्वरस्य कल्पकारोक्तं साकमेधाराधनं दर्शयति ॥

कैरातमीश्वर पिनाकधरं वपुस्ते
कृत्तिं वसानमुमया सह धर्मदारैः ।
आराधयंति खलु पर्वणि सामेकधैः
पुण्यैस्त्रियंबक हविर्भिरनन्यभावाः ॥ १०३ ॥

पिनाकधरं अजगवधरं कृत्तिं गचजर्म वसामं परिदधानं कैरातं वपुः धर्मदारैः उमया सह साकमेधे अंबिकया सह

साकं एधते महादेवः इति साकमेधो यागविशेषः तस्मिन् पर्वकाले अनन्यभावाः अनन्यमनस्काः पुण्यैर्हविर्भिः। "त्र्यंबकं यजामहे"। इति मन्त्रेणाराधयंति खलु। तथा च कल्पसूत्रे। "ततश्चतुर्षु मासेषु पूर्वास्मिन्पर्वे" त्युपक्रम्य। "त्र्यहं साकमेधैर्यजते"। इत्यारभ्य। "सन्तिष्ठते पिण्डपितृयज्ञे"। इत्यन्तेन देवतांतरयजनमुक्त्वा अथाह। "प्रतिपूरुषमेककपालं निर्वपति यावन्तो यजमानस्यामात्यास्सस्त्रीकाः"। इत्यारभ्य। "पिनाकहस्तः कृत्तिवासाः"। इत्यन्तं मन्त्रं सन्नाम्येति त्र्यैंबकं यजनमुक्तवान्सूत्रकारः मन्त्रस्यान्यथाकारस्सन्नामः अनन्यभावा इति श्रुतिषु बहुशः परमेश्वरार्चनमुपलभ्य अवधूतेतरदेवताभक्तय इत्यर्थः तत्रैव। "त्र्यंबकं यजामहे"। इति वर्तमानप्रयोगादजस्रमराधनीयश्शंकर इति भावः॥ १०३॥

यजुर्वेदे। "उपसृष्टशत मीढुषे मीढुष्ये स्वाहा"। इत्यादिमन्त्रैः कर्तव्यमीशानबलिविशेषं दर्शयदि॥

मीढ्वासमन्तविनिवेशितमीढुषीक
मन्तर्जयन्तमजरामरविग्रहं त्वाम्।
त्वद्वारपं दयितया सह देवसेनं
क्षेत्रस्य नाथमपि नाथ यजन्ति धन्याः॥१०४॥

मीढ्वासं वर्षयितारं जगदुपादाने स्ववीर्यसेक्तारं वा अन्तर्विनिवेशितमीढुषीकं समीपस्थापितवर्षयितृपत्नीकं अन्तर्जयंतं

मध्यस्थितस्कंदं अजरामरविग्रहं जरामरणरहितशरीरं त्वां त्वद्वारपं भवद्वारपालं दयितया द्वारपदेव्या द्वारपाल्या सह देवसेनं देवसेनासहितं चेत्रस्य नाथं क्षेत्राधिपतिं चेत्यर्थः धन्या यजन्ति एतानुद्दिश्य द्रव्यत्यागं कुर्वंति । तत्र श्रुतिः । यजुषि ईशानबलिविशेषे । "उपस्पृशत मीढुषे मीढुष्यै स्वाहा जयन्तोपस्पृश जयन्ताय स्वाहा भवाय देवाय स्वाहा"। इत्यादयः "देवसेनाउपस्पृशत देवसेनाभ्यस्वाहा द्वाराधिपोपस्पृश द्वाराधिपाय स्वाहा द्वारण्युपस्पृशद्वारण्यै स्वाहा निषंगिन्नुपस्पृश निषंगिणे स्वाहा नमो निषंगिण इषुधिमते क्षेत्रस्य पतिना वयम्"। इति चेति उपस्पृशत स्वीकुर्वन्त्वित्यर्थः ॥ १०४ ॥

"देवस्यायने प्रतिदिशं प्रद्योतयति"। इत्यादिबोधायनोक्तं बलिविशेषं तत्फलं चाह—

**पत्न्या समं सह गणैस्सह वा सुताभ्यां**
**सार्द्धं तथा परिक्षदा विषमेक्षण त्वाम् ।**
**अभ्यष्टमीतिथिनिशामुखमर्चयन्तः**
**मापं तरन्त्यपि जयन्ति महेश मृत्युम् ॥१०५॥**

पत्नया समं पर्वत्या समं गणैस्सह वीरभद्रादिभिर्गणैस्सह सुताभ्यां स्कंदविनायकाभ्यां च सह तथाशब्दश्चार्थे परिषदा च सार्द्धं हे विषमेक्षण त्वां अभ्यष्टमीतिथिनिशामुखमर्चयन्तः । सप्तमीविभक्त्यर्थे ऽव्ययीभावः । अष्टमीतिथिप्रदोषसमये

" त्र्यंभकं यजामहे " इति मन्त्रैः पूजयन्तः पापं तरंति अपि च मृत्युं जयंति अयं तु बोधायनोक्तो बलिविशेषः पूर्ववदेव-द्रष्टव्यः ॥ १०९ ॥

एवमनेकश्रुतिविहितं शंभुपूजनमनुवर्ण्य तत्प्रकाशमंत्राणां महात्म्यमाह—

मन्त्रा भवन्ति विरळा विबुधान्तराणां
सद्भाव एव शिव दर्शितशक्तयस्ते ।
त्वन्नामरूपगुणवर्णनलब्धवर्णा-
मन्त्रा न शक्यमवगंतुमियत्तया ते ॥ १०६ ॥

विबुधान्तराणां मन्त्राः विरळाः स्वल्पाः ते मन्त्रा विबुधान्तराणां सद्भावसत्तायामेव दर्शितशक्तयः दर्शितप्रभावाः न तु नामरूपवर्णनसमर्थाः इयत्तयावगंतुं शक्यमस्माभिरित्यर्थः त्वन्नामरूपगुणवर्णनलब्धवर्णाः भवन्नामधेयस्वरूपगुणप्रतिपादन-विचक्षणाः ते मन्त्राः इयत्तयावगंतुं ज्ञातुं न शक्यमिति विशेषा-र्थ्यैः विवक्षायां सामान्यार्थे एकवचनं नपुंसकलिंगञ्च ॥ १०६ ॥

तानेवाह—

रुद्रानुवाकपठितानि परस्सहस्रं
नामानि दिव्यमपि रूपमनेकशस्ते ।

शक्यं गुणा गणयितुं गणना यदि स्या-
द्भौमेषु पांसुषु विना तव देव मायाम् ॥१०७॥

" नमस्ते रुद्र मन्यवे " । इत्यादि रुद्रानुवाकपठितान्येव नामानि परस्सहस्रं दिव्यं ते रूपं अनेकशः अनेकसंख्यं हे देव तव मायां विना भौमेषु पांसुषु गणना यदि स्यात्तदा ते गुणा अपि गणयितुं शक्यं ईश्वरमायया भौमपांसूनां गणनातु । " यावन्तः पांसवोभूमेस्संख्याता देवमायया " । इति श्रुतेरवगम्यते ॥ १०७ ॥

एवं वेदमन्त्राणामीश्वरप्रकाशकत्वमुक्त्वा प्रसङ्गात्तत्प्रामाण्यमाह—

वेदस्स्वयं भवतु वा तव वा प्रणीति-
स्सर्वप्रमाणमविहाय गृणाति लोकः ।
तत्तत्प्रवक्तृगुणदर्शिततारतम्य-
मन्यत्प्रमाणमविरोधिनि वेदवाक्ये ॥ १०८ ॥

"पुरुषस्य ताल्वोष्ठपुटव्यापाराजन्यः स्वयं भवतीति स्वयंभूर्वेदः " इति मीमांसकाः । " ताल्वोष्ठादिव्यापारजन्यत्वात्पौरुषेय " इति नैय्याकाः । "ईश्वरप्रणीत " इति न्यायगर्भाः । " ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां " । इति श्रुतिवचनानुसारेण मीमांसकमते वेदस्स्वयं भवतु नित्यो वा भवतु नैय्यायि-

कवैशेषिकमतानुसारेण तव प्रणीतिः कृतिर्वा भवतु मीमांसकमतानुसारेण नित्यपक्षे ऽपि करणदोषशंकानिरासरूपप्रामाण्यस्य भव्यभूतसाधारणत्वेन तत्प्रतिपादक पुरुषसूक्त श्रीरुद्र वेदवाक्यजालैरीश्वरः प्रतिपाद्यत इतीश्वरसिद्धिः नैयायिकमतानुसारेण वेद अनित्य इति पक्षे ऽपि परमेश्वरकर्तृक इति परमेश्वरसिद्धिः लिङ्गादिप्रत्यया अपि परमेश्वराज्ञाभूतास्सन्तः यतस्तं प्रतिपादयन्ति उभयथापि लोकः प्रमाणमविहाय उपजीव्य गृणाति स्तौति वेदवाक्ये ऽविरोधिनि सति तत्तत्प्रवक्तृगुण दर्शिततारतम्यं वक्तृगुणनिरूपितप्राबल्यदौर्बल्यं अन्यच्चापि स्मृतिवाक्यं प्रमाणं विरोधे सति न प्रमाणम्। तथा चोक्तं जैमुनिना। "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानकम्"। इति श्रुतिस्मृतिवाक्ययोर्विरोधे तु अनपेक्षं नित्यतता वक्तृगुणप्रामाण्यानपेक्षं वेदवाक्यं प्रमाणं असति विरोधे तु अनुमानं स्मृतिवाक्यं प्रमाणमिति अविरोधिनीति यथाह मनुः। "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः"॥ १०८॥

वेदप्रामाण्यांगीकारेणैव तन्मूलभूतानामागमानां प्रमाण्यांगीकार इत्याह—

**वेदाः प्रमाणमिति संगिरमाण एव**
**दिव्यं तवागममवैति जनः प्रमाणम्।**

त्वध्यानवाक्यविषयौपयिकैः पदार्थै-
रामूर्द्धमाकलितविग्रहमाच मूलात् ॥ १०९ ॥

वेदाः प्रमाणमिति सङ्गिरमाण एव त्वध्यानवाक्यविषय-यौपयिकैः त्वध्यानवाक्यविषयत्वं भजमानैः। "युक्तमौपयिकं लभ्यं भजमानं विनीतवत्"। इत्यमरः पतिः पशुपाशज्ञानयोगक्रियाचर्या रूपैः पदार्थैः आचमूलात्"। आमूर्द्ध आकलित-विग्रहं व्याप्तशरीरं दिव्यं तवागमं जनः प्रमाणमवैति जानाति तथा च। स्मृति वाक्यम्। "त्रिपदार्थं चतुष्पादं महातन्त्र-मिति स्थितिः"। त्रिपदार्थमित्यत्र पतिः परमेश्वरः पशवो ब्रह्मादयः पाशा मलमायादयः। "ब्रह्मादिस्तम्बपर्यन्तान्पशून्ब-ध्वा महेश्वरः। पाशैरेतैः पतिर्देवः कार्यं कारयति स्वयम्"। इति। तदुक्तं श्वेताश्वतरोपनिषति "य एको जालवानीशत ईशनी-भिस्सर्वान्लोकानीशत ईशनीभिः"। इति मलमायादिपाशनिब-द्धानां संसारार्णवमग्नानां सर्वेषां परमेश्वर एवोत्तारयिता। तदुक्तं श्रीरुद्रे। "नमश्शङ्कराय च नमश्शिवाय च शिवतराय च नमः प्रतरणाय चोत्तरणाय च"। इति तस्मात्पशुपतिपाशरूपमवश्यं ज्ञातव्यमेव तद्व्यतिरिक्तमन्यत् ज्ञानं नास्तीति। श्वेताश्वतरे। "एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं न किंचित् भोक्ता भोग्यं प्रेरितारं च मत्वा"। इति। तथा च सनत्कुमा-रसंहितायां विष्णुवचनम्। "ज्ञानं परं पाशुपतं हि विद्धि

तद्ब्रह्मयोगं च यथोदितन्ते। ब्रह्माण्डतो निर्गमनाद्युपायो नास्त्येव शास्त्रेष्वखिलेषु धातः"। इति। अन्येषु च। ईश्वरविषयज्ञानमेव ज्ञानं तद्व्यतिरिक्तं सर्वमज्ञानमिति विष्णुपुराणे षष्ठांशे पञ्चमाध्यायसमाप्तौ। "परं पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे। स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपः प्रकटस्वरूपः। सर्वेश्वरस्सर्वकृत्सर्वदर्शीसमस्तशक्तिः परमेश्वराख्यः। स ज्ञायते येन निरस्तदोषश्शुद्धं परं निर्मलमेकरूपम्। सन्दृश्यते वाप्यधिगम्यते वा तद्ज्ञानमज्ञानमतोऽन्यदुक्तम्। ईश्वरविषयज्ञानं जानतामन्यत् ज्ञानं न रोचत" इति। महाभारते आनुशासनिकेऽप्युक्तम्। "यत् ज्ञात्वा न पुनर्जन्म मरणं वाऽपि विद्यते। यं विदित्वा परं वेद्यं वेदितव्यं न रोचते"। इत्यादि। एवं पशुपतिपाशाख्यत्रिपादार्थं ज्ञानयोगक्रियाचर्याख्यं चतुष्पादं शिवागमप्रमाणं जानन्तीत्यर्थः॥ १०९॥

एतदेव प्रपंचयति।

**ध्यानं यथा भवति तद्विषयो यथा त्वं**
**यादृग्गुणश्च भगवन्नधिकारिवर्गः।**
**सर्वाणि तानि भवदागमसंहिताभिः**
**कल्पैरिवाध्वरविधेरुपपादितानि॥ ११०॥**

ध्यानं ध्येये चित्तस्यैकविधप्रतयसन्तानं यथा भवति यादृशं भवति तद्विषयो ध्यानविषयः त्वं शिवः यथा यादृशः

गुणः यादृशगुणो भवति तानि सर्वाणि तन्त्राणि भवदागमसंहिताभिः अध्वरविधेस्तन्त्राणि कल्पैरिव कल्पसूत्रैरिव उपपादितानि ऋषिच्छन्दोदेवताविधियोगादिरूपेणोपपादितानि ॥ ११० ॥

आगमप्रामाण्योपोद्बलितवेदप्रामाण्यं प्रतिपाद्य प्रणवपरमार्त्थमहेश्वरार्चनयोग्यत्वापादकदीक्षाप्रार्त्थनवाक्यं कल्पकारमुखेनाह—

**अध्वानमध्वपतिमध्वनि तारतम्यं**
**श्रेष्ठाध्वपारगमनं च फलं ब्रवीति।**
**मन्त्रोऽध्वनामिति महेश्वर गृह्यकारः**
**पित्रा कुमारमुपनीय वदन्हि वाक्यम् ॥१११॥**

हे महेश्वर गृह्यकारः पिता कुमारमुपनीय उपनीतं कारयित्वा वाक्यं वाक्यरूपं यन्मन्त्रमाह । "अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीय"। इति मन्त्रः अध्वनां जात्यानामेकवचनं वर्णपदमन्त्रकलातत्वभुवनात्मानः षडध्वानः अध्वपतिं वर्णाद्यध्वपातमध्वनि तारतम्यं श्रेष्ठाध्वपारगमनं वर्णाध्वसारभूतप्रणववाच्यमहेश्वरप्राप्तिरूपं फलं ब्रवीति मन्त्रस्याप्ययमेवार्त्थः हे अध्वपते वर्णपदमन्त्रकलातत्वभुवात्मक षडध्वपालक अध्वना श्रेष्ठस्याध्वनः वर्णाध्वसारभूतप्रणवस्य पारं परमार्त्थं महेश्वरम् । "यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रविष्ठितः । तस्य प्रकृतिलीनस्य

यः परः स महेश्वरः"। इत्यादिना प्रणवपरमार्थभूतं महेश्वरं अशीय प्राप्नुयामि। इति ॥ १११ ॥

ऋषिमात्रप्रणीतकल्पसूत्रप्रामण्यवादिनां महर्षिशिवप्रणीतकामिकाद्यागमतन्त्राणां प्रामाण्यं सुतरामङ्गीकार्यमित्याह—

**कल्पाः प्रमाणमृषिभिर्यदि नः प्रणीताः**
**किन्न प्रमाणमृषिणा महता महर्षे।**
**शक्यं न वक्तुमपरिग्रहदूषितानि**
**तन्त्रान्तराणि भवता शिव कर्तृमन्ति ॥११२॥**

ऋषिभिः आश्वलायनापस्तंबादिभिः प्रणीताः कल्पाः नः अस्माकं प्रमाणं यदि हे महर्षे "विश्वाधिको रुद्रो महर्षिः" इति श्रुतेः महता ऋषिणा भवता प्रणीतं किं न प्रमाणं प्रमाणमेवेत्यर्थः। अतो भवता महर्षिणा कर्तृमन्ति कामिकादीनि तन्त्रणि अर्वाचीनापरिग्रहेण दूषितानि भवन्तीति वक्तुमशक्यमस्माभिरित्यर्त्थः ॥ ११२ ॥

महर्षित्वं स्वभावसर्वज्ञतामूलं तच्च सर्वद्रष्टुरस्यैव नान्यस्येत्याह—

**आचक्षते यमृषिमार्षविदस्तपोभि**
**रेकैकमन्त्रदृशमीश्वर वेदराशेः।**

द्रष्टारमस्य निखिलेन निजानुभावा-
दन्यानृषीनति महर्षिमतो विदुस्त्वाम् ॥११३॥

आर्षविद: वेदविद: तपोभि: वेदराशे: एकैकमन्त्रदृशं पुरुषमृषिमाचक्षते कथयन्ति। अत: कारणात् निजानुभावात् स्वभावसिद्धसामर्थ्यात् निखिलेन साकल्येन वेदराशेर्द्रष्टारं अन्यानृषीनति अतीत्य वर्तमानं महर्षिं विदु: ॥ ११३ ॥

सांख्यपाशुपतमतयो: नाममात्रे विप्रतिपत्ति: नार्थत इति सांख्यमतस्य प्रामाण्यमाह—

उक्तं प्रधानपुरुषेश्वरमेव सांख्यै-
राख्याय पाशपशुपत्यभिधानभेदात् ।
ज्ञेयं त्वदागमविदश्शिवसङ्गिरन्ता-
मेतावता किमिति नस्तदुपेक्षणीयम् ॥ ११४ ॥

सांख्यै: कपिलादिभि: सूरिभि: पंचशिखादिभिरुक्तं प्रधानपुरुषेश्वरमेव प्रधानं प्रकृति: प्रकृते: परिणामो विश्वं पुरुषो भिन्न: प्रकृतिबद्धस्संसारी तन्मुक्त उदासीन: प्रसन्न: परमेश्वर इति। पतञ्जलिना तु। "क्लेशकर्मविपाकाशयैरपरामृष्ट उपास्य ईश्वर:"। इति। समाहारे द्वन्द्वैकवद्भाव: पाशपशुपत्यभिधानभेदात् ज्ञेयं ज्ञातव्यमाख्याय त्वदागमविद: सङ्गिरन्तां प्रार्थनायां लोट्। "समः प्रतिज्ञाने"। इति गिरतेरात्मनेपदम्। एतावता

भेदेन तत्प्रधानपुरुषेश्वरं नः किमित्युपेक्षणीयं पाशपशुपति प्रकारप्रतिपादकत्वादुररीकर्तव्यमिति भावः ॥ ११४ ॥

ईश्वरार्चनस्य गृह्यकारानुक्तत्वादनुष्ठेयत्वशंकां निराकरोति—

**प्रत्यक्षवेदविहितं प्रथितं पुराणै-**
**र्बोधायनेन मुनिना बहुशः प्रणीतम् ।**
**सर्वार्थदर्शनपरैरपि गृह्यकारै-**
**र्यज्ञोपवीतमिति विस्मृतमर्चनन्ते ॥ ११५ ॥**

"तमुष्टुहिंयः स्विषुः"। "आवो राजानम्"। "अन्तरिच्छन्ति"। इत्यादि प्रत्यक्षवेदविहितम्। अनेन परोक्षवेदपराहृतिः पुराणैः प्रथितं बोधायनेन मुनिना महाभिषेकशूलगवादिक्रमेण प्रणीतं बहुशः प्रणीतं ते अर्चनमाराधनं सर्वार्थदर्शनपरैरपि गृह्यकारैः यज्ञोपवीतमिति अनुमतमपि विस्मृतं यज्ञोपवीतकालश्च केन चिन्मुनिना विहितं तदेव सर्वैर्गृहीतमनुष्ठितं च। "यज्ञोपवीतकालस्स्याद्वचने कृत आशिषाम्। पुरस्तात्समिदाधानाच्छिवस्वामिमतेन तु"। इति। शक्तैस्तु सर्वैरनुमतोऽपि विस्मरणान्नोक्तः पश्चाच्छिरसा धारितमित्यर्थः ॥ ११५ ॥

वेदपुराणप्रसिद्धस्य शिवार्चनस्य गृह्योक्तमात्रानुक्तमात्रेण न किञ्चिद्वैकल्यमित्याह—

वेदोपबृह्मक पुराणवचःप्रपञ्चै-
राघोष्यते विषमनेत्र समर्चनन्ते ।
तन्त्रैरलं तदुपबृह्मकवेदमूलै-
र्वात्याहतं न हि मुखानिलसव्यपेक्षम् ॥११६॥

हे विषमनेत्र ते समर्चनं वेदोपबृह्मकपुराणवचःप्रपञ्चैः वेदार्थप्रकाशकपुराणवाक्यजालैः आघोष्यते कण्ठतः प्रतिपाद्यते अतस्तदुपब्रह्मकवेदमूलैः तत्प्रकाशकवेदवाक्यमूलैः तन्त्रैः गृह्य-तन्त्रैः नालं न प्रयोजनमित्यर्थः । श्रुतिपुराणसिद्धत्वाच्छिवारा-धनस्य गृह्यतन्त्रानुक्तमात्रेणानादरणीयत्वन्नास्तीति भावः उक्तम-र्थमर्थान्तरन्यायेन दृढयति वात्याहतमिति वात्याहतं वातसमूहा-भिव्याप्तं वस्तु मुखानिलसव्यपेक्षं मुखोद्भववाताकांक्षं न भवति हि ॥ ११६ ॥

श्रुतिपुराणसिद्धस्य शिवार्चनस्य याज्ञवल्क्यादिस्मृतिका-रानुक्तत्वादननुष्ठेयत्वशङ्का न कार्येत्याह—

वेदार्थनिर्णयविधौ हि पुराणमङ्ग-
न्निर्णीतवेदविषया स्मृतयो भवन्ति ।
आतश्श्रुतेरिव पुराणगिरस्सकाशे
नालं प्रकाशयितुमात्मबलावलेपम् ॥ ११७ ॥

वेदार्थनिर्णयविधौ वेदार्थनिर्णयकरणे पुराणमङ्गं साधनं स्मृतयः निर्णीतवेदविषयाः पुराणनिर्णीतर्थवेदमूला भवन्ति

आतः अतः श्रुतेस्सकाश इव पुराणगिरस्सकाशे आत्मबलावलेपं स्वबलदर्पं प्रकाशयितुं प्रकटीकर्तुं नालं न समर्थाः पूर्वतनश्लोके पुराणवचःप्रपञ्चैश्शिवार्चनमाघोष्यत इत्युक्तम्। तत्तु वायवीयसंहितायाम्। "एककालं द्विकालं वा त्रिकालन्नित्यमेव वा। ये ऽर्चयन्ति महादेवं विज्ञेयास्ते महेश्वराः। जातेनात्मद्रुहा येन नार्चितो भगवान्शिवः। सुचिरं सञ्चरत्यस्मिन्संसारे दुःखसागरे। दुर्लभं प्राप्य मानुष्यं मूढो नार्चयते तु यः। निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः। दुर्लभं प्राप्य मानुष्यं ये ऽर्चयन्ति पिनाकिनम्। तेषां हि सफलं जन्म कृतार्थस्ते गणेश्वराः"। इत्यादि। लैङ्गे ऽपि। "तस्यांशमेकं संपूज्य देवा देवत्वमागताः। ब्रह्मा ब्रह्मत्वमापन्नो ह्यहं विष्णुत्वमेव च। स तं पूज्य जगत्यस्मिन्कः पुमान्सिद्धिमृच्छति"। इति। ब्रह्माण्डेऽपि। "यस्य ब्रह्माहमिन्द्राद्य ऋषयो ब्रह्मवादिनः। अर्चयन्ति सदालिङ्गं विश्वेशः खलु दृश्यते"। इति पाद्मे ऽपि। "उपस्यतां महादेवो विश्वेशस्त्रिपुरान्तकः। श्रिकण्ठो मेरुकोदण्डश्चण्डपापहरो हरः। शिवकल्पद्रुमात्पुष्पमणिमाद्यष्टसिद्धयः। चतुर्वर्ग फलप्राप्तिश्शिवपूजाविधेः फलम्"। इति। वामनपुराणे ऽपि। "एकासनसमारूढौ कृत्वा गौरीमहेश्वरौ। पूजयामास विधिवत् षोडशैरूपचारकैः"। इति। मार्कण्डेयपुराणेऽपि। "आत्मशुद्धिं पुरा कृत्वा संयमी विजितेन्द्रियः। शम्भुमाराधयामास मृत्योर्विजयकांक्षया"। शिवधर्मे

ऽपि। "यावन्नायाति मरणं यावन्नाक्रमते जरा। यावन्नेन्द्रियवैकल्यं तावत्पूजय शङ्करम्"। इति। स्कान्दे ऽपि। पूजयध्वं महालिङ्गे मदीये मन्त्रवर्त्मना। ततो ऽचिरेण कालेन विमुक्ता मामवाप्स्यथ। ब्रह्मात्र लिङ्गे हरिरत्र चातस्सुरा नराश्चेदमिहार्चयन्ति। तथापि मूढा न विचारयन्ति को वाधिको वास्ति समो हरस्य"। ब्रह्मकैवर्ते ऽपि। "पापक्षयं दर्शनमीश्वरस्य तत्स्पर्शनं भूतगणत्वदं स्यात्। तदर्चनं मोक्षफलप्रदं स्याद्यथाविधानं श्रतिमंत्रपूर्वम्। पुष्पैश्च मन्त्रैर्गिरिजैश्च वन्यैस्स्वारामजैर्बिल्वदळैस्सुकोमळैः। नवैर्नभूमौ पतितैश्च शुद्धैः पूजाखिलानां मनुजैर्विधेया"। शैवे एकादशरुद्रसंहितायाम्। "हृदयं विपाप्मं परमेश्वरस्य यद्वेश्मभूतं कमलं पुरस्थम्। तत्रापि दह्रं गगनंतु यच्छुभं तदेव नित्यं सकलैरुपास्यम्"। आदित्यपुराणे ऽपि। "कृष्णो ऽपि देवकीसूनुः परमात्मा सनातनः। कृतकृत्यो ऽपि योगात्मा मायावी विश्वभुक्स्वयम्। तथापि पूजयत्येव महादेवमुमापतिम्। लिङ्गे सर्वात्मकं मत्वा महादेवं पिनाकिनम्"। तीर्थगिरिमाहात्म्येऽपि। "शिवाराधनतो नान्यदिति संसारभेषजम्। यदि सत्यं तथा वाक्यं तेन शम्भुः प्रसीदतु"। सनत्कुमारसंहितायाम्। "वाराणसीं समासाद्य लिङ्गमैश्वरमुत्तमम्। प्रतिष्ठाप्य स्वनाम्ना च भविष्यति महातरुः। वीरिश्चस्य चक्राराज्ञामलमद्धा स्तुवन् हरिः"। सौरसंहितायामपि। "उमापतिर्नमस्कार्यस्सर्वैर्ध्येयो हृदम्बुजे। शिवो ध्येयो हरिब्रह्मप्रमुखै-

गुणमूर्तिभिः। तस्य ध्यानाद्धरिस्साक्षान्नारायणसमाह्वयः। देव स्सहस्रशीर्षा च विश्वाक्षो विश्वतोमुखः। विश्वो विश्वस्य निर्माता पालकश्च परात्परः। अक्षरः परमो नित्यो हरिर्मायापतिः प्रभुः। पुरुषश्च पुराणश्च तं विश्वमुपजीवति। सो ऽयं सर्वमहत्वेन तथा सर्वात्मनापि च। यो यः परायणत्वेन परब्रह्मात्मनापि च। यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयते ऽपि वा। अन्तर्बहिश्चतत्सर्वं व्याप्य तिष्टत्ययं खलु। साक्षाद्वेदान्तवाक्यानां निष्ठा रुद्रः पशोः पतिः। अम्बिकापतिरानन्दस्स्वयमेव न संशयः। सदा नारायणस्यापि ब्रह्मणः परमेष्ठिनः। रुद्रस्यापि शिवो ध्येयः किं पुनस्सर्वदेहिनाम्। तं सर्वकारणं रुद्रमणीयांसमणोरपि। महान्तं महतस्साक्षात्प्रणवेन प्रपूजयेत्"। इति। कूर्मपुराणेऽपि। श्रीकृष्णः। "भवता कथितं सर्वं तथ्यमेव न संशयः। तथापि देवमीशानं पूजयामि सनातनम्। न मे विप्रास्ति कर्तव्यं नानवाप्तं कथञ्चन। पूजयामि तथापीशं जानन्नपि परं शिवम्। नैव पश्यन्ति तं देवं मन्मायामोहिता जनाः। ततोऽहं स्वात्मनो मूलं ज्ञापयन्पूजयामितम्। न च लिङ्गार्चनात्पुण्यं लोके ऽस्मिन् भीतिनाशनम्। तथा लिङ्गे हिता येषां लोकानां पूजयेच्छिवम्। योऽहन्तल्लिङ्गमित्याहुः वेदवादविदो जनाः। ततो ऽहं देवमीशानं पूजयाम्यात्मनैव तु। तस्याहं परमामूर्तिस्तन्मयोऽहं न संशयः। देवदेवो महादेवस्सदा संसारभीरुभिः। ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो

लिङ्गे महेश्वरः" । इति । एवमुक्तप्रकारेण सर्वपुराणेष्वपि शिवार्चनमाघोष्यते ॥ ११७ ॥

स्मृतिरपि श्रुत्यनुमानापातितया प्रमणमित्याह—

मूलश्रुतेरनुपलंभपराहतााया-
दूतीव या न भवति स्वरसात्प्रमाणम् ।
प्रत्यक्षवेदविहितं यजनं त्वदीयं
तस्यास्मृतेरपि किमिच्छति दृष्टिपातम् ॥११८॥

अनुपलम्भपराहतायाः अनुपलब्धियोग्यायाः मूलश्रूतेः या स्मृतिः नायिकाया अनुपलम्भे तदनुसन्धायिका दूतीव स्वरसात्प्रमाणं न भवति प्रत्यक्षवेदविहितं त्वदीयं यजनं तस्यास्स्मृतेरपि अनुपलंभपराहत श्रुतिमूलस्मृतेरपि दृष्टिपातमिच्छति किं नेत्यर्थः प्रत्यक्षवेदविहितं त्वदाराधनमनुमेयश्रुतिमूलस्मृतिविधानं नापेक्षत इति भावः ॥ ११८ ॥

स्मृतावपि त्वदाराधनमुक्तमेवेत्याह—

पौर्वाह्णिकानुपदिशन्नियमान्यदेत-
दभ्यर्चनं मनुरवोचत देवतायाः ।
तत्किं पुनस्तव महत्यसि देवतात्वं
मृग्ये च काचशकलेन मणेरुपेक्षा ॥ ११९ ॥

पौर्वाह्णिकान् पूर्वाह्णनिर्वर्त्यान् नियमान् उपदिशन् देवताया यदेतदभ्यर्चनं मनुरवोचत उक्तवान् । "कुर्यान्नियत-

चित्तस्तु पूर्वाह्णे देवतार्चनम्" इति तदर्चनं तव किं पुनः त्वदाराधनमेवावोचतैव देवताविशेषात् त्वं महती देवतासि तदुक्तं भट्टाचार्यैः। "महादेवो देवस्सकलजगदाराध्यचरणस्त्रयीमार्गो मार्गः कुपथपथवृत्तिप्रमथनः। तयोर्योवा कुर्याद्वृजिनमनयोस्तस्य निदधे शिरस्यंघ्रिं वादिप्रळयदहनो ऽहं नृपसखे"। इति। तथाहि काचशकले मृग्ये मणेरुपेक्षा बालिशस्यापि न सम्भवति ॥११९॥

पुनरपि बोधायनोक्तमीश्वराराधनं दर्शयति—

**पत्न्या समं सह वृषेण वृषेन्द्रकेतो-**
**युष्मद्बलीनुपदिशं स्त्रिदशावकाशे।**
**अभ्यर्चनं भवनकल्पनपूर्वकं ते**
**बोधायनः कथितवानवयुत्य गृह्ये ॥ १२० ॥**

हे वृषेन्द्रकेतो वृषो धर्मः स एव केतुश्च वाहनं च। तथा च स्कान्दे। "कल्पान्ते संहृतिं कृत्वा स्वयमेको महेश्वरः। ननर्त परमं भावं स्वातन्त्र्यं चात्मनस्स्मरन्। एकोमा साक्षिणी विद्या चतुष्षष्टिकलेश्वरी। तस्यां वेदाश्च मन्त्राश्च संस्थिता ह्यङ्गतां गताः। तदा नाहो न रात्रिश्च न विष्णुर्न प्रजापतिः। नाकाशादीनि भूतानि किं पुनर्भौतिकं जगत्। धर्मोपरा तनुश्शम्भोर्दृष्ट्वा नष्टं चराचरम्। नाशो ममेति भीयुक्तः वृषो भूत्वेशमाश्रितः। मा भून्नाशो वृषस्येति तं चक्रे वाहनं शिवः। सर्वदा त्वविनाशाय वाहनत्वं भजस्व मे। कृते चर चतुष्पात्वं परिपूर्ण-

मनोरथः । त्रेतायां तु त्रिभिः पादैर्द्वापरे त्वं द्विपाद्भव । त्वं चरैकेन पादेन कलौ पादं त्रिभिश्चर । अत एव कलौ सर्वे प्राणिनः पापकारिणः । मूलाधारां च धर्मस्य मान्नजानाति कश्चन । धारणाद्धर्म इत्युक्तः पातनात्पातकन्त्वहम् । मन्निमित्त कृतं पापमपि पुण्याय कल्पते । मामनादृत्य धर्मो ऽपि पापं स्यात्प्रत्यवायकृत् । मान्धारयसि धर्मत्वं वृषरूपेण सर्वदा । त्वाञ्चाहं धारयिष्यामि मच्चक्रैवोपबृंहितम् । इत्येवं धर्ममाज्ञप्य वाहनत्वमकल्पयत् । तेन एव तु कल्पादौ दाहे तु तिसृणां पुराम् । विष्णुर्वृषेन्द्ररूपेण दधार शिरसा रथम् । तस्माद्धर्मस्सदा शम्भोः वृषरूपेण वाहनम् " । इति । तथा च महाभारते द्रोणपर्वणि । " कपर्दिनं वृषावर्तं वृषनाभं वृषध्वजम् । वृषदन्तं वृषपतिं वृषभं वृषभध्वजम् । वृषाङ्कं वृषभोरस्कं वृषभं वृषभेक्षणम् । वृषायुधं वृषाधारं वृषभूतं महेश्वरम् " । इति । हे वृषध्वज पत्न्या समं वृषेण धर्मेण सह त्रिदशावकाशे त्रिदशपूजावकाशे । "अथशूलगवस्संवत्सरेसंवत्सरे"। इत्यारभ्य पशूपाकरणे ईशानस्थालीपाकपुरस्सरमीशानबलिमुपादिक्षत् तन्मतोपजीविना आपस्तंबेनापि समासेनोक्तं यथा। " ईशानस्थालीपाकं श्रपयित्वेत्युपक्रम्य । " अपरेणाग्निं द्वे कुटी कृत्वा " । इत्युपक्रम्य " उत्तरया दक्षिणस्यामीशानमावाहयति लौकिक्या वाचा उत्तरस्यां मीढुषं मध्ये जयन्तम् "। इत्यादि तत्र मन्त्राः। " आत्वावहन्तु हरयस्सचेतसश्श्वेतैरश्वैस्सहकेतुमद्भिः । वाताजितैर्बलवद्भि-

र्मनोजवैरायाहि शीघ्रं मम हव्याय शवा"। इत्यावाह्य। "उपस्पृशत मीढुषे मीढुष्ये स्वाहा जयन्तोपस्पृश जयन्ताय स्वाहा भवाय देवाय स्वाहा"। इत्यादि। "भवस्य देवस्य पत्न्यै स्वाहा"। इत्यादि। "भवस्य देवस्य सुताय स्वाहा"। इत्यादि। बोधायनीयेत्यादि "बलिशेषग्रहोपस्पृश ग्रहायै स्वाहा"। इत्यादि "क्षेत्रस्य पतिना वयम्"। इत्यन्तं पार्षदपूजनं द्रष्टव्यं पूर्वमेव तुशतरुद्रीयाद्युपस्थामितीशानतत्पत्नीवृषबलीनुपदिशन्नवयुत्य अवधीकृत्य पृथक्कृत्येति वा भवनकल्पनपूर्वकमावाहनकल्पनपुरस्सरं ते ऽभ्यर्चनं गृह्येकथितवान्॥ १२०॥

ईश्वरस्य महादेवत्वे किं प्रमाणमित्याशंक्याथर्वशिरोवचनं प्रमाणमित्याह—

**भावान्तराणि परिहाय महस्तु नित्यं**
**विज्ञानयोगविभवेषु महीयसे यत्।**
**देवो महानभिहितो ऽसि ततः कपर्दि-**
**न्नाम त्वदीयमिदमाङ्गिरसा निराहुः॥ १२१॥**

भावान्तराणि अविद्याकल्पितत्वेन मृगतृष्णोपमान्विषयान् परिहाय परित्यज्य महस्तु विज्ञानयोगविभवेषु विज्ञानमात्मबोधः तदेव योगस्तस्यविभवः अनादिसिद्धमैश्वर्यं तत्र विभवेषु प्रशंसायां बहुवचनं यद्यस्मात्कारणान्महीयसे तत्तस्मात्कारणात् हे कपर्दिन् कं शिरः पिपर्ति पूरयतीति कपर्दो जटाजूटः सोस्या-

स्तीति कपर्दी तस्य सम्बोधनं महादेवो ऽभिहितोऽसि त्वदीयमिदं महादेवः इति नाम आङ्गिरसाः अथर्वशिरः अधीयानाः। "अथकस्मादुच्यते महादेवः यस्सर्वान्भावान्परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः"। इति वाक्येन निराहुः। महत्सु दीप्यत इति महादेवः छान्दसत्वादसमानाधिकरण्ये ऽप्यात्वम्॥ १२१॥

शिवार्चनमेव भोगमोक्षसाधनमित्याह—

**द्वेधा तवार्चनविधिस्तरुणेंदुमौले**
**कामाय कश्चिदपरो दुरितक्षयाय।**
**अप्यग्निहोत्रमुभयं वयमामनाम-**
**स्स्वर्गाय यद्भवति यद्दुरितं क्षिणोति॥ १२२॥**

हे तरुणेन्दुमौळे तवार्चनविधिर्द्वेधा द्विप्रकारः। "तमुष्टुहियःस्विषुः। "आवोराजानम्"। "तव श्रिये"। "त्र्यम्बकं यजामहे"। "अन्तरिच्छन्ति"। इत्यादिश्रुतिसिद्धं शिवलिङ्गार्चनम्। "ज्योतिष्टोमेन स्वर्गकामो यजेत"। इत्याद्यग्निहोत्रानुष्ठानञ्च तत्र कश्चिदर्चनविधिः कामाय काम्यत इति कामस्स्वर्गफलं तत्कामनयानुष्ठितस्संस्तस्यै भवति अपरो ऽर्चनविधिः दुरितक्षयाय दुरितक्षयद्वारा मोक्षाय भवति। कथमेकस्योभयविधत्वमित्याशङ्क्य दृष्टान्तमुखेनोपपादयति अपीति यत् स्वर्गाय यद्दुरितं क्षिणोति तदुभयं शिवलिङ्गार्चनं अग्निहोत्रमपि अग्नि-

होत्रशब्देन ज्योतिष्टोमादिकमुच्यते वयमामनामः। "ज्योतिष्टोमस्वर्गकामो यजेत तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन"। इत्यादि श्रुतिषु सकामनिष्कामानुष्ठितस्येश्वराराधनस्य ज्योतिष्टोमादेव स्वर्गापवर्गहेतुत्वं शृणुमः। तथा च। महाभारते आनुशासनिकपर्वणि श्रूयते। "एवं नानाविधैर्दिव्यैश्शिवलिङ्गं समर्चयेत्। मत्समानो मनुष्येषु न पुनर्जायते नरः। दत्तं संप्रीणयेद्देवी भक्तैर्मद्गतमानसैः। मया हि परितुष्टस्य नास्ति लोकेषु दुर्लभम्। एवं देवा यजन्तो हि सिद्धाश्च परमर्षयः। प्रार्थयन्ते परे लोके स्थानमेव हि शाश्वतम्। कृष्ण एव हि यष्टव्यो यज्ञ एष सनातनः। सर्वरूपं भवं ज्ञात्वा लिङ्गे ऽर्चयति यः प्रभुम्। तस्मादभ्यधिकां प्रीतिं करोति वृषभध्वजः। पूजयेद्विग्रहं यस्य लिङ्गं स्थाप्य महात्मनः। तस्माद्यजयिता नित्यं महतीं श्रियमश्नुते"। इत्यादि। "यो न पूजयते मोहाल्लिङ्गं त्रिभुवनेश्वरम्। स तु स्वर्गस्य मोक्षस्य न च राज्यस्य भाजनम्। अनिष्टमिष्टमिश्रञ्च त्रिप्रकारमिदं फलम्। भवेतत्यागिनां प्रेत्य न च सन्यासिनां क्वचित्"। इति ॥ १२२ ॥

शिवसंस्कारहीनानां शिवप्रसादस्य निषिद्धत्वात् परिहरणीयत्वमाह—

यद्ब्राह्मणस्त्वमसि नाकवतां निकाये
तुभ्यं निवेदितमभोज्यमिति स्मरन्ति।

उच्छिष्टमीश्वर विशिष्टमपि द्विजानां
भूमौ निखेयमथवांभसि मज्जनीयम् ॥ १२३ ॥

नाकवतां देवानां निकाये समूहे यत् यस्मात्कारणात् त्वं ब्राह्मणोऽसि तत्र श्रुतिः । "त्वं देवेषु ब्राह्मणोऽसि अहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युपत्वा धावामि" । इति । तथा च पुराणवचनम् । "ब्राह्मणो भगवान् रुद्रः क्षत्रियो विष्णुरुच्यते । ब्रह्मा वैश्यतस्तथा प्रोक्तः वासवश्शूद्र उच्यते" । इति । अतः कारणात् तुभ्यं निवेदितं प्रसादं समर्पितं शिवसंस्कारहीनानामभोज्यं स्मरति तथा । आदित्यपुराणे । जिह्वाचापल्यसंयुक्तशिवसंस्कारवर्जितः । शिवनिर्माल्यभोजी च रौरवं नरकं व्रजेत्" । द्विजानामुच्छिष्टं विशिष्टमपि भूमौ निखेयं अथवा अम्भसि मज्जनीयं निक्षेपणीयम् । तथा च कल्पसूत्रम् । "ब्राह्मणस्वकीयमुच्छिष्टमप्सु वा निक्षिपेत् भूमौ वा निखनेत् कस्मै चिन्न दद्यात् यदि दद्यात्पुत्राय वा शिष्याय वा न दान्तायानसूयवे धार्मिकाय" । इति । अतः खलु महेश्वरानुज्ञया पुत्रतुल्यैश्चण्डेश्वरादिभिर्गृहीतं शिवसंस्कारयुक्तै शिवमनुज्ञाप्य भोक्तव्ये पुराणवचनम् । "मामनुज्ञाप्य देवेशि चण्डेशो ब्राह्मणश्शुचिः । गृह्णीत मत्प्रसादन्तु भक्त्या पापनिकृन्तनम्" । आदिशब्देन ब्राह्मणैः । "अनुज्ञाप्य महादेवं चण्डेशञ्चात्मशुद्धये । धारयेन्मतिमान्भक्त्या प्रसादं पापनाशनम्" । इति जाबालोपनिषच्च ।

"रुद्रमुक्तं भुञ्जीत रुद्रपीतं पिबेत् रुद्रघ्रातं जिघ्रेत्"। इति ॥ १२३ ॥

परमेश्वरस्य ब्राह्मणत्वात् ब्राह्मणैस्त्वदुपासनमेव कार्यं नान्यदेवतोपासनमित्याह—

**त्वं ब्राह्मणस्त्वदुपधावनमेव कार्यं**
**तद्ब्राह्मणैस्त्वदितरे न भवन्त्युपास्याः।**
**न ब्राह्मणानवरवर्णनिषेवणेन**
**संभावयेम यदि न प्रपदं प्रमाणम् ॥१२४॥**

त्वं ब्राह्मणः तत्तस्मात्कारणाद्ब्राह्मणैस्त्वदुपधावनमेव त्वदुपासनमेव कार्यं त्वत् भवतः इतरेऽप्युपास्या न भवन्ति। "त्वं देवेषु ब्राह्मणो ऽसि अह"मिति प्रपदाख्यः सामवेदमन्त्रः प्रमाणं असन्दिग्धे सन्दिग्धवचनमेतत्प्रमाणमेवेत्यर्थः। अवरवर्णनिषेवणेन आत्मनो हीनवर्णविष्ण्वादिदेवतानिषेवणेन ब्राह्मणान्न सम्भावयेम प्रत्युत अब्राह्मणानेव सम्भावयामेत्यर्थः उक्तं हि सामवेदे प्रपदाख्ये। "तपश्च तेजश्च"। इत्युपक्रम्य मध्ये। "त्वं देवेषु ब्राह्मणो ऽसि अहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावति उपत्वा धावामि"। इति। "ऋतं सत्यं" इति श्रुतौ विरूपाक्षत्वादिरूपविशेषस्योत्पत्तिशिष्टतया ब्रह्मण्यन्वयावगमात् नान्यगामि कर्तुं शक्यमिति तादृग्रूपान्वयवानयुग्मनेत्रः अद्वितीयं ब्रह्मेत्येव धारणादपि प्रपदब्राह्मणेऽपि ब्राह्मणोत्तमो ब्राह्मणैरुपास्य इति प्रतिपाद-

नादपि। महोपनिषदि। "ब्रह्माधिपतिः"। इति पदेन ब्राह्मणस्सन् ब्राह्मणानामधिपतिरिति कर्मधारयसमासाश्रयणेन सर्वेषां ब्राह्मणानां कूटस्थ इति प्रतिपादनादपि ब्रह्माद्यैस्सर्वैर्ब्राह्मणैस्त्रयीसारभूतगायत्रीमन्त्रवाच्यगर्भपरिशीलनादपीश्वरोपासकानामेवब्राह्मण्यं नान्येषामित्यवगन्तव्यं परब्रह्मस्वरूपस्य सम्यक् निर्द्धारितत्वात् सामवेदप्रपदमन्त्रेऽपि स एव साक्षाद्ब्राह्मण इत्यभिधानात्तदुपसकानामेव ब्राह्मण्यम्। एवं पराशरपुराणेऽपि। "ततो विप्रस्य सम्बन्धश्शिवेनैव हि युज्यते। संकरास्सर्वदेवाश्च वृषळश्च पुरन्दरः। पितामहस्तु वैश्यश्च क्षत्रियः परमो हरिः। ब्राह्मणो वै सदालोके ब्राह्मणं चोपधावति। महाब्राह्मणमीशानमुपधावेन्नचेतरम्"। इति। यजुर्वेदे ऽपि। "यो वै स्वां देवतामतियजते प्रस्वायै देवतायैप्रच्यवते न परां प्राप्नोति पापीयान् भवति"। इति। अतियजते अतिक्रम्य यजते स्वस्य देवतायाः देवतान्तरयजनमेवातिक्रमः तस्मात्स्वायै देवतायै प्रच्यवते परां गतिमपि न प्राप्नोति पापियान्भवति। इति तस्यार्थः। यजुर्वेद एव। "एष वो भरताराजा सोमो ऽस्माकं ब्राह्मणानां राजेत्याह तस्मात्सोमराजानो ब्राह्मणाः"। इति। "यजुर्वेदं क्षत्रियस्याहुर्योनिं सामवेदो ब्राह्मणानां प्रसूतिः"। इति। अनेन रुद्रदेवत्यसामवेदप्रसूता ब्राह्मणाः तस्मात्तेषां रुद्र एवोपास्य इति श्रुतिषु बहुधा श्रूयते अत्रेदं प्रसङ्गाक्रमूचिरे यस्य पितृपितामहप्रपितामहा यं देवमाराधयन्ति असावपि तं देवमाराधयेदिति

नियम इति तन्न । पित्राद्याराधिते भक्त्यभावात् । तथाहि । वैष्णवस्य दशरथस्य पुत्रो रामो माहेश्वरः । माहेश्वरस्य हिरण्यकशिपोः पुत्रः प्रह्लादो वैष्णवः । वैष्णवस्य वसुदेवस्य पुत्रः कृष्णो माहेश्वरः । वैष्णवस्य पराशरस्य पुत्रः व्यासो माहेश्वरः। इति । "प्रतिष्ठाप्य महादेवं सेतुमध्ये स राघवः । अवाप परमां सिद्धिं शिवेशंभोरनुग्रहात्" । इत्यादिना रामचन्द्रस्य माहेश्वरत्वमवगम्यते। व्यासकृष्णयोस्तु । "तस्माद्व्यासात्परो नान्यश्शिवभक्तो जगत्त्रये । न कृष्णादधिकस्तस्मादस्ति माहेश्वराग्रणीः। नार्जुनेन समश्शंभोर्भक्त्या पूतो भविष्यति । मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम्" । इत्यादि ॥ १२४ ॥

ननु शिवसंस्कारहीनानां शिवप्रसादस्याभोज्यत्वे को हेतुरिति श्लोकत्रयेणाह—

**उत्कर्षतः परिहरन्त्यपकर्षतो वा**
**का वासना भवति कस्य कृते न विद्मः ।**
**यद्दीक्षितस्य पतितस्य च तुल्यरूपं**
**प्रत्यादिशन्ति मुनयः कमनीयमन्नम् ॥ १२५ ॥**

उत्कर्षतः उत्कृष्टात् शिवप्रसादं परिहरन्ति अपकर्षतः निकृष्टाद्वा अत्र च का वासना भवति कस्य प्रयोजनस्य कृते कारणायेति न विद्मः न जानीमः वचनव्यतिरिक्तं किंचिदपि निमित्तं न दृश्यत इत्यर्थः यत् यस्मात्कारणात् मुनयः दीक्षि-

तस्य पतितस्य पतनीयब्रह्महत्यादिपातककारिणश्च कमनीयमन्नं तुल्यरूपं प्रत्यादिशन्ति प्रत्याचक्षते अभोज्यमिति वदन्तीत्यर्थः। तथा च हारीतः। "यदन्नं प्रतिलोमस्य शूद्रजस्योत्तमस्त्रियाम्। महापातकिनश्चैव यदन्नं स्वीकृतं तयोः। अत्र कृच्छ्रं चरेद्भुक्त्वा प्रमादाद्ब्राह्मणस्सकृत्"। इति। "वर्ज्यानो दीक्षितो विप्रैर्यावद्राजपरिक्रिया"। इति॥ १२५॥

चण्डालचण्डिलचितानलशौण्डिकानां
गोब्राह्मणज्वलनदीक्षितयोषितां च।
स्पर्शः कया भवति वासनया निषिद्धः
स्पृष्टेषु वा शिव कया विहिता विशुद्धिः॥

चण्डालचण्डिलचितानलशौण्डिकानां अन्त्यजनापितचितानिमद्यविक्रयिणाम्। "समौ चण्डिलनापितौ"। इत्यमरः गोब्राह्मणज्वलनदीक्षितयोषितां च स्पर्शः कया वासनया निषिद्धो भवति एतेषु स्पृष्टेषु कया वासनया विशुद्धिः प्रायश्चित्तं विहितं गोब्राह्मणादिनामकारणस्पर्शो निषिध्यते प्रायेण गुरुशुश्रूषणाद्यर्थेनेति अत्रापि च वचनादृते नान्यत्कारणमस्तीति भावः॥ १२६॥

वर्ज्यान्नमाहुरपि दीक्षितमग्निकल्पं
भोज्यान्नमेव कृतराजपरिक्रयं तम्।

शंखास्थि पावनमपावनमस्थि नृणा-
मित्थं स्थिते वचनमत्र परायणन्नः ॥ १२७ ॥

अग्निकल्पमपि दीक्षितं वर्ज्यान्नमाहुः कृतराजपरिक्रयं कृतसोमविक्रयिणं तं दीक्षितमभोज्यान्नमेवाहुः। तत्र श्रुतिः। "कृतराजपरिक्रयोभोज्यान्नः" इति। पुराणवचनं च। "वर्ज्यान्नो दीक्षितो विप्रैः यावद्राजपरिक्रयम्। इति। शङ्खास्थि पावनं नृणां अस्थि अपावनमाहुः। तत्र स्मृतिः। "नारं स्पृष्ट्वास्थि सहसा सवासा जलमाविशेत्"। इति। इत्थं स्थिते नः अस्माकं वचनमेव परायणं परमकारणं न युक्तिः ॥ १२७ ॥

इदानीं शिवप्रसादव्यतिरिक्तं ब्राह्मणानान्न भोज्यमित्याह—

अब्राह्मणैः क्षुदपघातकमस्तु भोज्यं
यद्देवतान्तरनिवेदितमुक्तमन्नम्
तद्ब्राह्मणैरपि किमीश्वर वैश्वदेवे
भार्यो बलिर्बलिमतामशितेन तेन ॥ १२८ ॥

देवतान्तरनिवेदितमुक्तं विष्ण्वादिदेवताभुक्तोज्झितं यदन्नं तदब्राह्मणैः ब्राह्मणव्यतिरिक्तैः क्षत्रियादिभिः क्षुदपघातकं भोज्यमस्तु तेन अशितेन विष्ण्वादिदेवताभुक्तोज्झितेन ब्राह्मणैरपि वैश्वदेवे बलिमतां अग्न्यादीनां बलिर्हार्यः किं दातव्यं नेत्यर्थः ॥ १२८ ॥

अत्रैव मतान्तरमुपक्षिप्य दूषयति—

देवान्तरैरशितमुक्तमनंगशासि-
न्नश्नन्ति चेदनशितेन बलिं हरन्तः ।
आश्यैकदेशविहितो बलिरन्यथास-
न्नालं फलाय विपरीतफलश्च तेषाम् ॥ १२९ ॥

हे अनङ्गशासिन् परमेश्वर अनशितेन देवान्तरमुक्तो-ज्झितादन्येन बलिं हरन्तः बलिहरणं कुर्वन्तः देवान्तरैः विष्ण्वा-दिदेवान्तरैः अशितमुक्तं भुक्तोज्झितं अश्नन्ति चेत् बलिः आश्यैकदेशविहितः आश्यमशनीयमन्नमित्यर्थः तदेकदेशकृतस्सन् एतेषां फलाय नालं न समर्थः किंतु विपरीतफलः आभिचारफ-लजनकः तदत्रेतरदेवताभुक्तोज्झितमन्नं ब्राह्मणाभोज्यमिति वच-नादर्थापत्तिप्रमाणेन । अप्रतिषिद्धमनुमतम् । इति न्यायेन महेश्वरप्रसादो ब्राह्मणैरेव सकलपापनिर्हरणार्थं ग्राह्य इति भावः अनेन ब्राह्मणैश्शिवप्रसाद एव भोक्तव्यः नान्यदेवताप्रसाद इत्युक्तम् । तथा च । शैवे । "शम्भोर्निर्माल्यकं शुद्धं भुञ्जीया-त्सर्वतो द्विजः । अन्यदेवस्य निर्माल्यं भुक्त्वा चांद्रायणं चरेत्" । इति । "रुद्रमुक्तं भुञ्जीत" । इति श्रुतिसामर्थादी-श्वरमुक्तोज्झितेन तु वैश्वदेवभोजनयोः कर्तव्यतेति हि स्थितं विशेषतश्शिष्टैर्ब्राह्मणैरेव शिवप्रसादभोक्तव्यत्वे जाबालीया श्रुतिः । "रुद्रेण भुक्तमश्नन्ति रुद्रेणाघ्रातं जिघ्रन्ति । तस्माद्ब्राह्मणाः

प्रशान्तमनसो विद्वांसो निर्माल्यमेव भक्षयन्ति निर्माल्यमेव निषेवेत निर्माल्यमेवाश्नीया" दिति। तथा च स्कान्दे। "शिष्टाश्शान्ताश्च रुद्रेण भुक्तमेव हि भुंजते। घ्रातमेव हि जिघ्रंति पीतमेव पिबन्ति च"। शिवप्रसादस्य ब्राह्मणैरेव भोक्तव्यत्वमकरणे प्रत्यवायं चाह। कठश्रुतिः। "त्रिगुप्सातमश्नीयाद्यदि पाप्मन् शिवे नार्पितं भुंक्ष्व तदेनो भुंक्ष्वकृमिं भुंक्ष्वाधो गच्छेत" इति। अस्यार्थः। त्रिगुरुति त्रिस्रः गावः यस्येति त्रिगुः अत्र गोशब्देन चक्षुरिंद्रियमुच्यते त्र्यंबकः इत्यर्थः तेन त्रिगुणा प्सातं प्सा भक्षणे प्साधातोः कर्मणि यिष्ठा ततः प्सातन्त्र्यंबकेन भक्षितं अश्नीयात् भुंजीयात् हे पाप्मन् शिवे नार्पितं यदि भुंक्ष्व यद्यश्नीयाः तस्कारणादेनो भुंक्ष्व एनश्शब्देन महापातकिनो यत् फलं शिवानर्पितभोजने भवतीति तात्पर्यं क्रिमिं भुंक्ष्व अघं भुंक्ष्व क्रिमिभक्षणेअघभक्षणे यदुपपादकं तत्फलं च शिवे नार्पितभोजने भवतीति अधोगच्छेति वीप्सायां अधो गच्छ नरकं गच्छ पुनः पुनः सर्वकालं नरकपाती भवेत्यर्थः। तथाच-पाद्मवचनम्। "असमर्प्यौदनं शंभोर्भुक्ते खादति पाति चेत्। श्वमांसमस्थि मूत्रं च भुङ्तेखादति पाति च। निर्विकल्पधिया शंभोर्मुक्तोच्छिष्टान्नपानकम्। योभुङ्क्ते स गणाधीशोयावज्जीवं प्रतिज्ञया"। इति॥ १२९॥

इदानीमीश्वरस्य ब्रह्महननिर्मित्तं भिक्षाटनमिति भ्रान्तिनिवृत्यर्थं ब्रह्महननाभावं प्रतिपादयति—

ब्रह्माणमीश्वर पुरा हतवानसीति
　भिक्षाटनं विमृशतः प्रतिभानमात्रम्।
यत्पंचमे शिरसि पुष्पसमं निकृत्ते
　जीवंतमेनममितायुषमाहुराप्ताः　॥ १६० ॥

हे ईश्वर ब्रह्माणं पुरा हतवानसीति भिक्षटनं विमृशतः पर्यालोचयतः पुरुषस्य प्रतिभानमात्रं यत् यस्मात्कारणात् पञ्चमे शिरसि पुष्पसमं यथा भवति तथा निकृत्ते छिन्ने सति दीवन्तमेनममितायुषं आप्ता आहुः तस्मिन्मृते खलु तद्धननप्रायश्चित्ततया भिक्षाटनं स तु न मृतः अतो न तद्धननिमित्तं भिक्षाटनं किंतु लीलैवेति भावः ॥ १३० ॥

"ब्रह्मघ्नो वसनं शाणं कपालशकलं करे। केतुयष्टौ शवशिरो भैक्षं सप्तनिकेतनम्"। इति स्मृत्युक्तप्रायश्चित्तव्रतलक्षणानां कात्स्न्येंनादर्शनाच्च न ब्रह्मवधनिमित्तं भिक्षाटनमित्याह—

आनाभिजानु वसितं वसनं न शाणं
　पाणौ कपालशकलं न विलोकितं ते।
नालंबते शवशिरस्तव केतुयष्टौ
　भैक्षं न साप्तभवनं सकलं तदास्ताम्　॥१३१॥

आनाभिजानु नाभिमारभ्य जानुपर्यन्तं शाणं वसनं न वशितं न परिहितं ते पाणौ कपालशकलं न विलोकितं न दृष्टंश्रुत्या

न श्रुतमित्यर्थः तव केतुयष्टौ ध्वजदण्डे शवशिरो नालम्बते न सज्जतं साप्तभवनं सप्तभवनेषु क्रियत इति । शेषे । इत्यण् भैक्षं भिक्षासमूहः । तस्य समूहे । इत्यण् "ब्रह्मघ्नो वसनम्" । इत्यादि स्मृतिकथितं लक्षणं कार्त्स्न्येन न विद्यते तत्सकलमास्तां लोके वेदविरुद्धब्रह्मवधतत्प्रायश्चित्तव्रतसकललक्षणाङ्गीकारेऽपि नेश्वरस्य प्रत्यवाय इति भावः ॥ १३१ ॥

परमताभ्यनुज्ञया तदकिञ्चित्करमित्याह—

यत्कालभैरवकृतं पतनीयमेनः
 किं तेन ते भवति भैक्षमथापि वृत्तिः ।
तन्मध्यपातिनिवधे विबुधान्तरस्य
 निर्वेदमाचरसि किंनु भवानजस्रम् ॥ १३२ ॥

अथापि कालभैरवकृतं यत्पतनीयमेनः ब्रह्मवधः तेन पापेन ते भैक्षावृत्तिः भवति किं नेत्यर्थः । पापाभावात्तदपि नास्तीति भावः तन्मध्यपातिनिसः ब्रह्मवधः जन्ममध्ये पाति यस्य तस्मिन् विबुधान्तरस्य वधे अजस्रं मुहुर्मुहुः ब्रह्मविष्णुप्रभृतीन परश्शतं संहारेऽपि भवान् निर्वेदं दुःखं आचरसि किंनु नेत्यर्थः किञ्च ब्रह्महत्यादेःप्रायश्चित्तविधिं यः किल विधत्ते स एव निगृहीतः तदधस्तात्किल प्रजापतिदशकमुनिवासवादयः यत् उत विष्णुस्वललाटतटगळितरुधिरधारासारभिक्षाप्रदानसमये वि-

ष्वक्सेनव्याजेन देवस्य शूलाग्रे प्रोतः। तथा चाभियुक्तवचनम्। "विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले हरिं शूलप्रोतं यदग-मयदंसाभरणताम्"। इति। तथा च पुराणवचनम्। "ब्रह्माण-मिन्द्रं विष्णुं च यममन्यान्सुरासुरान्। यतो निगृह्य हरसि हर इत्युच्यते बुधैः"। इति। "हतानि विष्णुबृन्दानि विशीर्णा ब्रह्मकोटयः। त्वयैकेन हतश्शम्भो"। इत्यादि। श्रुतिश्च। "हरिं हरन्तमनुयन्ति देवाः विश्वस्येशानं वृषभं मतीनाम्"। इत्यादि॥ १३२॥

अतः पाशुपत्यवरणभिक्षाटनादौ लीलामन्तरेण न किञ्चित्कारणं वक्तुं शक्यमित्याह—

यत्पाशुपत्यमवृणोदमरांतरेभ्यो
भिक्षां भवनकृत यत्परमेश्वरोऽपि।
चोद्यं तदेतदुभयं परिहर्तुकामो
मन्ये ब्रहस्पतिरपि प्रतिपत्तिशून्यः॥ १३३॥

हे परमेश्वर भवान् परमेश्वरोऽपि परमैश्वर्यवानपि अम-रान्तरेभ्यो देवान्तरेभ्यः पाशुपत्यं अवृणोदिति यत् भिक्षां भिक्षाटनं अकृतेति यत् तदुभयं चोद्यं लीलामन्तरेण परिहर्तु-कामो बृहस्पतिरपि प्रतिपत्तिशून्यः। इति मन्ये उत्तरवाक्य-प्रदानं प्रति शून्य इति विचारयामि परमेश्वरस्य पाशुपत्यवरण-

भिक्षाटनाख्यकर्मणोर्लीलामन्तरेणान्यनिमित्तं वक्तुं बृहस्पतिरपि असमर्थ इत्यर्थः। तथा च पुराणवचनम्। त्रिपुरदहनसमये देवान्प्रति। "स्वतस्सिद्धं पतित्वं मे युष्माकं पशुतापी च। तदेतद्दर्शयाम्यद्य वरबन्धविनोदनै"। इति। पार्वतीं प्रति शिवरहस्येऽपि। "मया दत्तेन देवेशि माहात्म्येन विमोहिताः। मां न जानन्ति दातारं गर्वग्रस्तास्सुरासुराः। ब्रह्मविष्णुमहेन्द्राद्यास्तानहं लीलया मुहुः। करभिक्षाटनव्याजाद्धितगर्वान्विधाय च। भीमरूपधरस्स्वैरी शूलपाणिः कपालवान्" ॥ १३३ ॥

"मद्भक्तश्शङ्करद्वेषी मद्द्वेषी शङ्करप्रियः। तावुभौ नरकं यातः यावच्चन्द्रदिवाकरौ। परात्परतरं यान्ति नारायणपरायणाः। न ते तत्रगमिष्यन्ति ये द्विषन्ति महेश्वरम्। ममैषा परमा मूर्तिर्नारायणसमाहृया। सर्वभूतात्मभूतस्था शान्ता चाक्षरसंज्ञिता। ये ऽन्यथा संप्रपश्यन्ति लोके भेददृशो जनाः। न ते मां संप्रपश्यन्ति जायन्ते च पुनः पुनः। येत्विमं विष्णु मव्यक्तं वामदेवं महेश्वरम्। एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः। तस्मादनादिनिधनं विष्णुमात्मानमव्ययम्। मामेव संप्रपश्यध्वं पूजयध्वं तथैवच। येऽन्यथा संप्रपश्यन्ति मत्वैनं देवतान्तरम्। ते यान्ति नरकान् घोरान्नाहं तेषु व्यवस्थितः। मूर्खं वा पण्डितं वापि ब्रह्मघ्नं वा मदाश्रयम्। मोचयामि श्वपाकं वा न नारायणनिन्दकम्। विष्णोरन्यन्तु पश्यन्ति ये मां ब्रह्माणमेव

च। कुतर्कमतयो मूढाः पच्यन्ते नरकेषु ते"। इति पुराणवाक्यानामेकत्वप्रतिपादनपराणां विषयव्यवस्थामाह—

ब्रह्मासि विष्णुरसि सर्वमसीति यत्त्वा-
मास्तामुपासनविधिं कथयन्ति मूढाः।
तद्देवतान्तरनिकर्षनिगूहनाय
मोहाय वा भवतु जल्पितमल्पबुद्धेः ॥ १३४ ॥

त्वं ब्रह्मासि विष्णुरसि सर्वमसीति त्वामुद्दिश्य मूढाः कथयन्तीति यत् तत् देवतान्तरनिकर्षनिगूहनाय देवतान्तरापकर्षप्रच्छादनाय अल्पबुद्धेः मोहनाय भ्रान्तये वा जल्पितं भवतु तत्तावदास्तां किं तेन विचारेणास्माकमिति भावः ॥ १३४ ॥

वेदान्तविहितमद्वैतमपि निराकरोति—

अद्वैतमागमशिरोभिरुपासनाया-
मुक्तं तवेति परमार्थतया न वाच्यम्।
भेदस्फुटो गरुडमान्त्रिकयोरळीकं
तादात्म्यभावनमथापि विषं प्रमार्ष्टि ॥ १३५ ॥

आगमसिरोभिः वेदान्तैः उपासनायामद्वैतं अद्वितीयत्वमुक्तं तवेति परमार्थतया न वाच्यं अथापि गरुडमान्त्रिकयोर्भेदः स्फुटः तदात्म्यभावनमैक्यध्यानं अहेर्विषं प्रमार्ष्टि अपनयत्येव ननु अद्वैतमागमशिरोभिरुपासनायामुक्तमिति हरदत्ताचार्यैः ज्ञान-

काण्डस्योपासनाशेषित्वमुक्तं जैमुनिमतानुसारिणस्तु कर्मशेषित्वं वर्णयन्ति वैयासिकास्तु कर्मकाण्डोपासनायाश्च ज्ञानशेषित्वं वर्णयन्ति एवं विप्रतिपत्तौ सत्यां कस्य प्राधान्यमिति चेदुच्यते कर्मकाण्डे तु कर्मैव प्रतिपाद्यते न ज्ञानं ज्ञानकाण्डे तु ज्ञानमेव प्रतिपाद्यते न कर्म कर्मकाण्डे ज्ञानकाण्डे ऽप्युपासना प्रतिपाद्यत इति उपासनाया आधिक्यं प्रतिभाति। महोपनिषदि। "वेदान्तविज्ञानसुनिश्चितार्थास्सन्यासयोगाद्यतयश्शुद्धसत्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे। दहरं विपाप्मं वरवेश्यभूतं यत्पुण्डरीकं पुरमध्यसंस्थम्। तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्"। इति वेदान्तविज्ञानपारङ्गतानामप्युपासना विधीयत इति ज्ञानकाण्डस्योपासनाशेषित्वं स्पष्टं प्रतीयते। ननु तत्वमसीत्यादिवाक्ये उपक्रमादिषड्विधतात्पर्यलिङ्गैस्सर्ववेदान्तानामद्वैते ब्रह्मणि तात्पर्यमिति तज्ज्ञानमेव साक्षान्मोक्षसाधनमिति चेत् इहापि महोपनिषद्युपक्रमादिषड्विधतात्पर्यलिङ्गैरीश्वरोपासनाया एव साक्षान्मोक्षसाधनत्वं प्रतिपाद्यत इति तुल्यं किञ्च। एतद्वै महोपनिषदम्। इति उपनिषदन्तरेभ्योऽस्या उपनिषदोमहत्वश्रवणात् उपनिषदन्तरमेतत्तुल्यं न भवति तुल्ययोरेव हि विरोधः न हि परमाणुः मेरुणा स्पर्धते तस्मात्कर्म ज्ञानकाण्डयोरुपासनाशेषित्वमिति सिद्धं अस्तु। ज्ञानकाण्डस्योपासनाशेषित्वं तथापि उपास्यं ब्रह्म किं तदिति निश्चीयत इति चेन्न। "ऋतं सत्यं परं ब्रह्म

पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः”। इति । “उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्” । इत्याद्युपनिषद्वाक्यजालैः शृङ्गग्राहिकया बहुधा दर्शितत्वात् । तथापि शंभोः परानुग्रहं विना न जानन्तीत्युप रम्यते ॥ १३५ ॥

ईश्वरस्य श्रुतिपुराणोक्तान्यद्भुतकर्माणि दर्शयति—

**यद्ब्रह्मपंचमशिरोलवनापदानं**
**यद्ब्रह्मणा च हरिणा च विमार्गणं ते ।**
**यद्वा तयोर्जनयितारमधीमहे त्वा-**
**न्तत्सर्वमीश्वर विमूढधियामसह्यम् ॥ १३६ ॥**

ब्रह्मपञ्चमशिरोलवनापदानं प्रजापतिपञ्चमशिरच्छेदनाख्यमद्भुतं कर्म अधीमह इति यत् ते ब्रह्मणा च हरिणा च विमार्गण मन्वेषणमधीमह इति यत। तत्र ऐतरेयश्रुतिः। “पदावरामहाभ्येति रेमन् प्रहंसासस्त्रीपरममन्युमच्छमदस्तं वृषगणा अयासुः”। इति। तयोर्जनतितारं उत्पादकं अधीमह इति यत् । तत्र मैत्रायणश्रुतिः । “अण्डं हि सह्यं सोढुं शक्यं” । हरिब्रह्मणोरीश्वरान्वेषणे ईश्वरादुत्पत्तौ च कूर्मपुराणवचनम् । “एवं विवादे वितते मायया परमेष्ठिनः । प्रबोधार्थं परं लिङ्गं प्रादुर्भूतं शिवात्मकम् । कालानलशतप्रख्यं ज्वालामालाशताकुलम् । क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् । ततो मामाह भगवानधो गच्छ त्वमाशु

वे। अन्तमस्य विजानीयामूर्ध्वं गच्छेहमित्यजः। तथा च समयं कृत्वा गतावूर्ध्वमधश्च तौ। पितामहो ऽप्यहन्नान्तं ज्ञातवन्तौ समाश्शतम्। ततो विस्मयमापन्नौ जातौ देवस्य शूलिनः। मायया मोहितौ तस्य ध्यायन्तौ तिश्वमीश्वरम्। प्रोच्चरन्तौ महानादं ओंकारं परमं पदम्। ब्रह्माहं विस्मयोपेतौ शंभुं तुष्टावतुः परम्। अनादिमलसंसार रोगवैद्याय शम्भवे। नमश्शिवाय शान्ताय ब्रह्मणे लिंगमूर्तये। प्रळयार्णवसंस्थाय प्रळयोद्भूतिहेतवे। नमश्शिवाय शन्ताय ब्रह्मणे लिंगमूर्तये। ज्वालामालावृताङ्गाय ज्वलनस्तब्धमूर्तये। नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये॥ वेदान्तसाररूपाय कालरूपाय धीमते। नमश्शिवाय शान्ताय ब्रह्मणे लिंगमूर्तये॥ निर्विकाराय नित्याय सत्यायामलतेजसे। नमश्शिवाय शान्ताय ब्रह्मणे लिंगमूर्तये॥ महादेवाय महते ज्योतिषे ऽनन्तमूर्तये। नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूतये॥ प्रधानपुरुषेशाय व्योमरूपाय वेधसे। नमश्शिवाय शान्ताय ब्रह्मणे लिंगमूर्तये। एवं संस्तूयमानस्तु व्यक्तो ऽभूत्परमेश्वरः। भाति देवो महायोगी सूर्यकोटिसमप्रभः। वक्त्रकोटिसहस्रेण ग्रसमान इवाम्बरम्। सहस्रहस्तचरणस्सोमसूर्याग्निलोचनः। पिनाकपाणिर्भगवान् कृत्तिवासास्स्थिरद्युतिः। व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिस्वनः। अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ। पश्यतां मे महायोगं भयं सर्वं विमुच्यताम्। युवां प्रसूतौ गात्राभ्यां मम पूर्वं सनातनौ। अयं हि

दक्षिणे पार्श्वे ब्रह्मा लोकेश्वरः परः। वामपार्श्वे च वै विष्णुः पालको हृदयंगमः। प्रीतोऽहं युवयोस्सम्यग्वरं वृणुतमीप्सितम्। एवमुक्त्वाथ तौ देवौ महादेवश्शिवस्स्वयम्। आलिंग्य माञ्च ब्रह्माणं प्रसादाभिमुखोऽभवत्। ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम्। ऊचतुः प्रेक्ष्य तद्वृत्तं नारायणपितामहौ। यदि प्रीतिस्समुत्पन्ना यदि देयो वरश्च नौ। भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वरे"। तथा च वायवीयसंहितायाम्। "दिव्यं वर्षसहस्रं च चरन्विष्णुरथो गतः। तावत्कालं गतश्चोर्ध्वं तस्यान्तं ज्ञातुमिच्छया। श्रान्तो ह्यत्यन्तमदृष्ट्वा न्तमपयातः पितामहः। तथैव भगवान्विष्णुश्श्रान्तस्संविग्नमानसः। क्लेशेन महता तूर्णमर्णवादुत्थितो ऽभवत्। ऋग्वेदः पुनराहेदं जाग्रद्रूपं मयोच्यते। येनाहमात्मतत्वस्य नित्यमस्त्यभिधायकः। यजुर्वेदो ऽभवद्भूयस्स्वप्नावस्थामयोच्यते। भोग्यात्मना परिणता विद्या चैव मनोमयी। सामोप्याहसुषुप्त्याख्यं पर्वसर्वं मयोच्यते। ममार्थेन शिवेनैवं तामसेनानुभूयसे। अथर्वाह तुरीयाख्यं तुरीयातीतमेव च। मयाभिधीयते तस्मादध्वातीतः परश्शिवः। अथाध्वकं च त्रितयं शिवविद्यात्मसंज्ञकम्। तत्त्रैगुण्यं त्रयीसाध्यं परमेशपदैषिणाम्। तत्तुरीयं च नैर्गुण्यादध्वनोऽस्य विशोधकम्। तयोः प्रमापको नादो नादात्मा ह मदात्मकः। तस्मान्ममार्थं स्वातन्त्र्यात्प्रधानः परमेश्वरः। यदस्ति वस्तुतत्सर्वं गुणप्रधान्ययोगतः। समस्तं व्यस्तमप्यस्ति प्रणवार्थं प्रचक्षते। सर्वार्थवाचकं

तस्मादेकं ब्रह्म तदक्षरम्। तेनोमिति जगत्सर्वं कुरुते प्रथमं शिवः। शिवो हि प्रणवो ह्येषः प्रणवो वा शिवस्मृतः। वाच्य-वाचकयोर्भेदो नात्यन्तं विद्यते यतः। चिन्तया सहिता रुद्रं वाचोऽयं मनसासह। अप्राप्य तन्निवर्तन्ते वाच्यस्त्वेकाक्षरेण सः। एकाक्षरादकाराख्यादात्मा ब्रह्माभिधीयते। एकाक्षरादु-काराख्याद्विद्या विष्णुरुदीरितः। एकाक्षरान्मकाराख्याच्छिवो रुद्र उताहृतः। दक्षिणाङ्गान्महेशस्य जातो ब्रह्मात्मसंज्ञितः। वामाङ्गादभवद्विष्णुस्ततो विद्येति संज्ञितः। हृदयात्कालरुद्रो ऽभू-च्छिवस्य शिवसंज्ञितः। सृष्टेः प्रवर्तको ब्रह्मा स्थितेर्विष्णुः प्रवर्त-कः। संहारस्य तथा रुद्रःतयो र्नित्यं नियामकः। त्रयस्ते कार-णात्मानः कथ्यन्ते जगतः क्रमात्। कारणत्रयहेतुश्च शिवः परमकारणम्। एतमर्थमविज्ञाय रजसा बद्धवैरयोः। युवयोः प्रीतिबोधाय मध्ये लिङ्गं समुत्थितम्। एवमोमोमिति प्राहुर्यदि होक्तमथर्वणा। ऋचो यजूंषि सामानि शाखाश्चान्यास्सहस्रशः। वेदेष्वपि स्वयं वक्त्रैर्व्यक्तमित्थं वदत्स्वपि। स्वप्नानुभूतमिव तत्ता-भ्यां नाध्यवसीयते। तयोस्ततः प्रबोधाय तमोपनयनाय च। लिङ्गे ऽपि मुद्रितं सर्वं यथा वेदैरुदाहृतम्। तं दृष्ट्वा मुद्रितं लिङ्गे प्रसादाल्लिङ्गिनः प्रभोः। हृतान्धतसौ देवौ ब्रह्मविष्णू बभूवतुः। ततो लिङ्गस्य लिंगत्वं लिङ्गिनो ऽपिच लिङ्गिता। लिङ्गे विश्वस्य जगतो विशेषात्स्वात्मनोरपि। उत्पत्तिं विलयञ्चैव यथार्थं च षडध्वनाम्। ततः परं शिवस्यास्य प्रधानाधिकपौरुषम्। निरुत्त-

रतरं ब्रह्म निष्कळं शिवमीश्वरम्। पशुपाशमयस्यास्य प्रपञ्चस्य सदा पतिम्। अकुतोभयमव्यक्तमवृद्धिक्षयमव्ययम्। साह्यमभ्यन्तरं व्याप्यं भावाभावविवर्जितम्। निरस्तातिशयं शश्वद्विश्वलोकविचक्षम्। अलक्षणमनिर्देश्यमवाङ्मनसगोचरम्। प्रकाशैकरसं शान्तं प्रसन्नं सततोदितम्। सर्वकल्याणनिलयं शक्त्या तादृशयान्वितम्। ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा। रचयित्वाञ्जलिं मूर्ध्नि भीतौ तौ वाचमूचतुः। ब्रह्मा। अज्ञो वाहमभिज्ञो वा त्वयादौ देव निर्मितः। ईदृशीं भ्रान्तिमापन्नमिति को ऽत्रापराध्यति। आस्तां ममेदमज्ञानं त्वयि सन्निहिते प्रभो। निर्भयः को ऽपि भाषेत कृत्यं स्वस्य परस्य वा। आवयोर्देवदेवेश विवादो ऽपि सुशोभनः। विष्णुः। स्तोतुं देव न वागस्ति महिम्नस्सदृशी तव। प्रभोरग्रे विधेयानां तूष्णीं भावोव्यतिक्रमः। किमत्र सङ्कटे कृत्यं....वावसरोऽपि वा। अजानन्नपि यत्किंचित्प्रलप्य त्वां भजाम्यहम्। कारणत्वं त्वया दत्तं विस्मृत्य तव मायया। मोहितोऽहंकृतश्चाहं पुनरेवास्मि शासितः। विज्ञापितैः किं बहुभिर्भीतो ऽस्मि भृशमीश्वर। यतो वाचो निवर्तन्ते न परिच्छेत्तुमुद्यतः। त्वामुशन्ति महेशानं भीतानामार्तिनाशनम्। अतो व्यतिक्रमं मे ऽद्य क्षंतुमर्हसि शङ्कर। इति विज्ञापितस्ताभ्यामीश्वराभ्यां महेश्वरः। प्रीतो नुगुणसंपन्नौ तौ च सर्वमभाषत। वत्स वत्स विधे विष्णो मम मायाविमोहितौ। युवां प्रभुत्वाहंकृत्या बद्धवैरौ परस्परम्। विवादं युद्धपर्यन्तं कृत्वा नोपरतौ

किल। युवयोरेव संसृष्टिर्जगत्कारणभूतयोः। अज्ञानमानप्रभवाद्वै-
मत्याद्युवयोरिति। तन्निवर्तयितुं युष्मद्दर्पमोहौ मयैव तु। एवन्नि-
वारितावद्य लिङ्गाविर्भावलीलया। तस्माद्भयं विषादं च व्रीळां
चोत्सृज्य कृत्स्नशः। यथा स्वं कर्म कुरुतां भवतौ वीतमत्सरौ।
पुरा ममाज्ञया सार्द्धं समस्तज्ञानसंहितौ। युवाभ्यां हि मया दत्तं
कारणत्वप्रसिद्धये। मन्त्ररत्नं च सूत्राख्यं पञ्चाक्षरमयं परम्।
मयोपदिष्टं तत्सर्वं युवयोर्विस्मृतं यदि। ददामि च पुनस्सर्वं
यथापूर्वं ममाज्ञया। यतो विनायुवामेवमक्षमौ सृष्टिकर्मणि।
एवमुक्त्वा महादेवो नारायणपितामहौ। मन्त्रेणाज्ञां ददौ ताभ्यां
ज्ञानसंहितया सह। तौ लब्ध्वा महतीं दिव्यामाज्ञां माहेश्वरीं
पराम्। महार्त्थमन्त्ररत्नं च तथैव सकलाः क्रियाः। दण्डवत्प्र-
णतिं कृत्वा महादेवस्य पादयोः। अतिष्ठतां वीतभयावानंदस्ति-
मितौ तदा। एतस्मिन्नन्तरे चित्रमिंद्रजालवदीश्वरम्। लिङ्गं
क्वापि तिरोभूतं न ताभ्यामुपलभ्यते। ततो विलप्य हाहेति
सद्यः प्राणभयं गतः। किमसत्यमिदं वृत्तमिति चोक्त्वा परस्प-
रम्। अचिन्त्यवैभवं शंभोर्विचिन्त्य विगतव्यथौ। अभ्युपेत्य
परां मैत्रीमाविश्य च परस्परम्। जगद्व्यापारमुद्दिश्य जग्मतुर्देव-
पुंगवौ"। इत्यादि। तथाच लैङ्गेऽपि "तुष्टस्तु तपसा तस्य भवो
ज्ञात्वा तु वाञ्छितम्। स्त्रीपुंरूपो ऽभवत्साक्षात्सदसद्व्यक्तिवर्जितः।
शिवो ऽथ पद्मजं साक्षाद्भगवन्तं हरिं तदा। ब्रह्मणो मानसान्पु-
त्रान्ददाह च जगत्पतिः। अथार्धमात्रां कल्याणीमात्मनः परमे-

श्वरीम्। बुभुजे योगमार्गेण वृध्यर्थं जगतां शिवः। तस्यां हरिं च ब्रह्माणं ससर्ज परमेश्वरः। मुने मैथुनजान् सृष्टान् तयोश्शक्तिं ददौ च सः। लब्धशक्तिद्विधा कृत्वा देहं मैथुनजो विराट्। अर्धेन चाकरोद्भार्यां तस्यां सर्वं ससर्ज ह। तेनाभवन्महादेवो ह्यर्द्धनारीश्वरो हरः। विश्वेश्वरस्तु विश्वात्मा चास्त्रं पाशुपतं तथा। तस्माद्ब्रह्मा महादेव्याश्चांगजश्च हरिस्तथा। अण्डजः पद्मजश्चैव भवांगभव एव च"। इत्यादि॥ १३६

ननु "सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्योः जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोथ विष्णोः"। इति श्रुतौ सोमलतायाः विष्णोर्जनकत्वं प्रतीयत इत्यत आह—

सोमे लतात्मनि महेश्वर गौणवृत्त्या
विष्णोरवादि जनकत्वमृचा कयापि।
त्वय्येव तद्भवितुमर्हति मुख्यवृत्त्या
नेन्द्रे न पङ्कजभवे नितरां मुरारौ॥ १३७॥

हे महेश्वर लतात्मनि सोमे सोमलतायामित्यर्थः कयापि ऋचा। सोमः पवते इत्यृचा विष्णोर्जनकत्वं प्रशंसार्थमुक्तमिति भावः॥ १३७॥

"ब्रह्मविष्णुरुद्रेन्द्रास्संप्रसूयन्ते न कारणम्"। इति। "नारायणाद्रुद्रो जायते"। इति श्रुतिद्वयबलाद्धरिहरयोरन्योन्यजनकत्वंभवत्वित्यत आह—

**अन्योन्यतो यदि भवेदहमीश्वरस्स्यां**
**त्वंञ्चाहमीश्वर किमत्र नियामकं नः।**
**कोवा विपर्यसितुमर्हति वस्तुशक्ति-**
**न्तत्तत्स्वभावनियतां भवदाज्ञयापि ॥ १३८ ॥**

उभयोर्हरिहरयोर्भवतोरन्योन्यतो जन्म यदि भवेत् तदा अहं ईश्वरस्यां त्वञ्चाहं स्यां अत्र नः किं नियामकं परमात्मनो महेश्वरस्यान्यतउत्पत्त्यङ्गीकारे नियामकाभावात् जीवेश्वरव्यवस्था न सिध्यतीति भावः। नारं जलसमूहं अयनं स्थानं यस्य स नारायणः इति नारायणात् सर्वान्तर्यामिणो महेश्वरात् रुद्रः कालाग्निरुद्रो जायते इति श्रुतेरर्थः। अथवा नारायणाद्रुद्रो ज्वरो जायते इति वा अत्रेदं तत्वम्। "ब्रह्मविष्णुरुद्रेन्द्रास्सम्प्रसूयन्ते न कारणं" "शंभुः न प्रसूयते न तस्य जनिता कश्चिन्नच जन्म कुतश्च न अजात इत्येवं कश्चिद्भीरुः प्रपद्यते"। इत्याद्युपनिषद्वाक्यजालैः परमेश्वरस्यान्यत्र उत्पत्त्यभावः त्रिमूर्तीनां परमेश्वरादुत्पत्तिश्च बहुधा प्रतिपाद्यते किञ्च बहुषु पुराणेषु महाभारते च ब्रह्मविष्ण्वादीनां परमेश्वरादुत्पत्तिश्श्रूयते। वैष्णवपुराणे च ब्रह्मणो मरीचिः मरीचेः काश्यपः काश्यपाद्विष्णुः

इति स्मरणात् बहुपुराणविरोधात्। "नारायणाद्रुद्रो जायते नारायणाद्ब्रह्मा जायते" इति नारायणस्य गुणवातमाहुः तथाच मीमांसायाम्। "विरोधे गुणवादस्स्यादनुवादो ऽवधारणे। भूतार्थवादस्ताद्धानामर्थवादस्त्रिधा मतः"। इति। अपिच भवदाज्ञयापि नियतां तत्तत्स्वाभावनियतां वस्तुशक्तिं को वा विपर्यसितुमर्हति न को ऽपि विपर्यस्यतीति भावः स्वभावसिद्धं न को ऽप्यन्यथयितुं शक्नोति ॥ १३८ ॥

ईश्वरस्य देवतान्तरवद्गर्भनिस्सरणं जननं नास्तीत्याह—

एकं तवाप्यसुकरं तदुदाहरामो
जातेन भाव्यममरान्तरवत्त्वयापि।
अभ्यर्थितो ऽपि हि महेश महर्षिदारै-
रन्तर्हितस्त्वमसि गर्हितगर्भवासः ॥ १३९ ॥

हे महेश तवापि ईश्वरस्यापि एकं कर्म असुकरं दुष्करं तदुदाहरामः त्वयाप्यमरान्तरवज्जातेन मातृगर्भनिस्सारणजन्मवता भाव्यमिति महर्षिदारैः अनसूयया अभ्यर्थितो ऽपि गर्हितगर्भवासः निन्दितगर्भवासस्सन् अन्तर्हितो ऽसि। तथाच पुराणवचनम्। "यदि देवाः प्रसन्ना मे प्रजापतिपुरोगमाः। वरदा वरयोग्या च यद्यहं भवतां मता। द्युश्च मम पुत्रत्वं ब्रह्मविष्णुमहेश्वराः। सोमो ब्रह्मा ततो विष्णुर्दत्तात्रेयो व्यजायत।

दुर्वासाश्शङ्करात् जज्ञे वरदानाद्दिवौकसाम्" । इत्यादि । तत्र दत्तात्रेयो व्यजायत इत्युक्तत्वात् तयोः ब्रह्मविष्णवोः शुक्लशोणितसन्निपातत्वं जन्मेति शिवस्य तु प्रादुर्भावमात्रं इति विज्ञेयम् । एवं सनत्कुमारसंहितायां विष्णुवचनम् । "यथावत्ते प्रवक्ष्यामि ज्ञानयोगनिषेवितम् । अत्याश्रमो ऽयं सर्वेषां चतुर्ष्वप्याश्रमेषु च । यः पशुः स्वपशुत्वञ्च व्रतेनानेन न त्यजेत् । तं हत्वा न स पापियानिनि शास्त्रस्य निश्चयः । आत्मानः पशवः प्रोक्तास्सर्वे संसारवर्तिनः । तेषां पतिरयं देवो रुद्रः पशुपतिः परः । भूतानामधिपो रुद्रः क्रीडं....चरो वृषा । स्वेच्छयापि न यस्याहुः हतसंसारसंग्रहम् । पुरात्रेरपि यत्पत्न्याः करादेवाभवत्सुतः । स्वल्पांशेनापि गर्भस्य दुर्वासस्त्वमुदाहरन् । ब्रह्मापि भगवान् विष्णुर्जज्ञाते तत्सतौ पुरा । असौ देवः क्रमात्पुत्रकारणात् स्नातया तया । सपुष्पाञ्जलिना हूतो विससर्जांशकं स्वकम् । अन्तरञ्जलिपुष्पेषु प्रविश्यांशः पिनाकिनः । गर्भवासो हि दुवासः सर्वावासेष्विवतीव यत् । दुर्वासा नाम पुत्रो ऽभूत् तस्याः पुष्पाञ्जलेश्शिशुः । तस्मात्पशुपतेरन्यद्यत्किञ्चिज्जगतीरितम् । सर्वे ते पशवः प्रोक्ता वशी पशुपति स्मृतः । मायापाशेन बध्नाति पशूनेतान् स्वलीलया । तमेव मोचकं प्राहुः पशूनां ब्रह्मवादिनः । मायापाशेन बद्धानां मोचको ऽन्यो न विद्यते । तमेव परमात्मानं सूताधिपतिमीश्वरम्" ॥ १३९ ॥

ननु विष्णोरिवेश्वरस्यापि स्वेच्छया गर्भवासो ऽस्त्वित्याह—

इच्छावतीर्णमुरशासनगर्भवास-
स्स्याच्चेदुदाहरणमेष विमर्शनीयः ।
गर्भे वसामि परिवेष्ट्य जरायुणा ऽहं
मासान्बहूनिति महेश्वर कस्य कामः ॥ १४० ॥

इच्छावतीर्णमुरशासनगर्भवासः स्वेच्छावतीर्णविष्णुगर्भस्थितिः उदाहरणं चेत् एष गर्भवासः विमर्शनीयः स्वेच्छया गर्भवासो विचारार्हो न सिध्यतीत्यर्थः । हे महेश्वर कस्य वा अहं बहून्मासान् जरायुणा परिवेष्ट्य गर्भे वसामीति कामो भवति न कस्यापि न कश्चिदपि गर्भवासार्थं यतते । तस्मात् स्वेच्छावतारं कृतवान्मुरशासन इत्यसङ्गतम् ॥ १४० ॥

अस्तु वा इच्छावतारः तथाऽपि कर्मनिमित्त एवायमित्याह—

इच्छापि नूनमनुयाति पुरा कृतानि
कर्माणि शङ्कर शुभाशुभलक्षणानि ।
इच्छावतारवचनानि तु भारतादौ
नारायणस्य गुणवादमुदाहरन्ति ॥ १४१ ॥

हे शङ्कर इच्छापि पुरा कृतानि शुभाशुभलक्षणानि सुकृतदुष्कृतरूपाणि कर्माण्यनुयाति विष्णोरपि पुरा कृतानि भृगुपत्नीवधादिदुष्कृतकर्माणि सन्ति। तथाच ब्रह्माण्डपुराणे श्रूयते। "देवासुराणां सङ्ग्रामः पूर्वमासीत्सुदारुणः। अनेककालपर्यन्तो महाप्रळयसन्निमः। ते वध्यमाना गीर्वाणैः काव्यमातुर्निकेतनम्। दिव्याया विविशुस्त्रस्ताः दनुजाः कृपणा इव। सा तु तानाह विशतो न भेतव्यं मदाश्रमे। चक्रिणो वज्रिणो वापि यमाद्वाभीर्नमद्गृहे। तावच्चक्री च वज्री चताननुद्रुत्य चागतौ। वज्रिवाक्याद्धरिश्शीघ्रं चक्रेणाच्छिनदुत्तमाम्। ऋषिपत्नीं गृहाभ्यन्तर्दनुजानप्यथाच्छिनत्। तां दृष्ट्वा निहतां भार्यां ब्रह्मपुत्रो भृगुस्तथा। क्रोधाज्जज्वाल घर्मान्ते कक्षासक्त इवानलः। भृगुः। शृणु विष्णो वचो घोरं देवाधिपभयावहम्। अनिन्द्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम। यद्यहं त्र्यंबकान्नान्यं देवं वेद्मि महेश्वरात्। तेन सत्येन गोविन्द नरकं दश यास्यसि। नारसिंह्मादिभिर्देहैः कुत्सितैस्तामसैस्थता। अनेकदुःखबहुळैर्युक्तो भव चिरं हरे। एकदण्डास्त्रिदण्डाश्च ये च भक्ता हरे त्वयि। ते ऽपि पाषण्डिनस्सन्तु दृष्ट्वापि नरकप्रदाः। इत्युक्त्वा भृगुरागम्य मृतसंजीवनीं स्मरन्। सन्धानमकरोत्पत्न्याः शिरश्चाप्युदभूत्क्षणे। इत्युक्तो भृगुणा कृष्णश्शिवं ध्यायं स्ततोययौ। गिरिं बृन्दारकावासं मन्दरं चारुकन्दरम्। नारायणस्तपस्तेपे जटी मुण्डी च मेखली। भस्मदिग्धो ऽग्निहोता च शान्तस्त्रिषवणप्लुतः। कृच्छ्रैः

चान्द्रायणाद्यैश्च शोषयन् स्वकलेबरम्। दिव्यं वर्षसहस्रं तु वायुभक्षस्ततोऽभवत्। कोटित्रयन्तु वर्षणां दिव्यानां मधुसूदनः। वायुभक्षस्सदा ध्यायन् शङ्करं लोकशङ्करम्। तन्द्रष्ट्वा तादृशं नन्दी शिवस्यैवापरा तनुः। उवाच भरतस्थाने वनमाली तपस्यति। अनेककोटिवर्षाणि चक्रपाणिस्सुरारिहा। आरूढवृषभश्शम्भुः प्रादुश्चक्रे हरेः पुरः। विष्णुना प्रणतो देवस्तुतः प्रीतो ऽवदद्धरिम्। वत्स विष्णो प्रसन्नो ऽस्मि कथं चरसि वै तपः। इति श्रुत्वा वचश्शम्भोर्वाच्यमर्थं व्यजिज्ञिपत। भृगुणाहं तु शप्तो ऽस्मि शापान्मां मोचयेश्वर। इति श्रुत्वाथ गोविन्दं मध्न्र्याघ्राय स्पृशन्मुहुः। उवाच सान्त्वयन्विष्णुं सर्वेशो वृषभध्वजः। ईश्वरः। मामनुस्मृत्य यच्छापं चकार भृगुरात्मवान्। आत्मनैव कृतां शिक्षां नात्मना नाशयाम्यहम्। पापानामतिकष्टानामल्पानां क्रूरकर्मणाम्। दशोक्ता ये तु नरकास्तामसा मुनिपुङ्गव। मत्स्यकूर्मादिभिर्देहै र्दशभिर्मुक्तकिल्बिषः। मत्प्रसादं समासाद्य दिव्यां योनिं प्रयास्यसि। यदा योनिगुणावस्थो विवेकी विहरिष्यसि। तदा विनेष्ये त्वाम्मोहान्मोक्तुं च वचनाद्धरे। त्वं तु शास्ताहि सर्वस्य शास्ताहं तव चक्रिणः। न मे शास्तापरो यस्मान्न प्रमादः क्वचिन्मम। ततस्त्वं भवताभुक्तस्वाधिकारपरिच्युतौ। अथ किंबहुनोक्तेन शव। संक्षेपाच्छृणु मे वाक्यं भवाब्ध्युत्तारणप्लवम्। प्रमादाद्यदि वा मोहात्सुषुप्तावपि दुर्गतौ। यश्शिवेति स्मरेत्कश्चित्तं विद्धि मां गुरुं यथा। स तु मान्यश्च पूज्यश्च सर्वावस्थोऽपि

सर्वदा। ओं नमश्शिवायेत्युन्मादेनापि कीर्तयेत्। रुद्र शंभो महादेव हर सर्वज्ञ शङ्कर। वामदेवेश श्रीकण्ठ नीलकण्ठेति यस्मरेत्। तेनाहं परमां प्रीतिं गच्छामि किमतः परम्। दीक्षां पाशुपतिं नाम यत्र यत्राश्रमे श्रिताः। सर्वैः पूज्या मया तुल्या भस्मरुद्राक्षलिङ्गिनः। एवमुक्त्वा महादेवस्सभार्यो गणपैर्वृतः। मूर्ध्न्याघ्राय समाश्वास्य तिरोभूत् वृषभध्वजः"। स्कान्दे ऽपि। "वज्री प्रोवाच गोविन्दं यावन्नावां दहेदियम्। तावदस्याश्शिरश्छिन्धि चक्रेणानेन केशव। इत्युक्तः केशवस्तस्याः क्रूरं देव्याश्चिकीर्षितम्। ज्ञात्वा चिच्छेद चक्रेण शिरस्त्रीवधनिर्घृणः। तां दृष्ट्वा निहतां भार्यां ब्रह्मपुत्रो भृगुस्तथा। क्रोधाज्जज्वाल घर्मान्ते कक्षासक्त इवानलः। भृगुः। शृणु मे वचनं घोरं देवाधम भयावहम्। अनिन्द्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम। यद्यहं त्र्यम्बकान्नान्यं देवं वेद्मि महेश्वरात्। तेन सत्येन गोविन्द नरकान् दश यास्यसि। नारसिंह्मादिभिर्देहैः कुत्सितैस्तामसैस्तथा। अनेकदुःखबहुळैर्युक्तो भव चिरं हरे। एकदण्डास्त्रिदण्डाश्च ये च भक्ता हरे त्वयि। ते ऽपि पाषण्डिनस्सन्तु द्रष्टाश्चेन्नरकप्रदाः। इत्यदि। तथापि लैङ्गे ऽपि। "भृगोरपिच शापेन विष्णुः परमवीर्यवान्। प्रादुर्भावदशां प्राप्तो दुःखितश्च सदा कृतः"। इत्यादि। तथा चोत्तररामायणेऽपि। "तया परिगृहीतान् तान्दृष्ट्वा क्रुद्धस्सुरोत्तमः। चक्रेण शतधारेण भृगुपत्न्याश्शिरो ऽहरत्। ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्भ-

वः। शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम्। यस्मादवध्यां मे भार्यामवधीः काममूर्च्छितः। तस्मात्त्वं मानुषे लोके निवत्स्यति जनार्दन। ततः पत्नी वियोगं त्वं प्राप्स्यसे बहुवार्षिकम्"। इत्यादि। अतः खलु दशावतारः क्लेशानुभवः। तथा च कृष्णवाक्यम्। "कर्माणि न विनश्यन्ति गतैर्बहुयुगैरपि। अयुद्धेन हतो बालस्तस्येदं कर्मणः फलम्"। इति। ननु यदि विष्णोरवतारः कर्मनिमित्तं तर्हि। "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे"। इत्यादि महाभारतवचनानामैच्छिककारणजन्मप्रतिपादकानां का गतिरित्याह। इच्छावतारेति भारतादौ इच्छावतारवचनानि इच्छैककारणावतारप्रतिपादकवाक्यानि पुराणान्तरविरोधाद्दोषवादमपि गुणवादाख्यमर्थवादमाहुः। तथाच मीमांसकः। "विरोधे गुणवादस्स्यादनुवादोऽवधारणे। भूतार्थवादस्तध्यानामर्थवादस्त्रिधामतः"। इति। ॥ १४१ ॥

निश्शेषदुःखविच्छेदपरमानन्दावाप्ति लक्षणस्य मोक्षस्य ईश्वरज्ञानैकलभ्यत्वमाह—

विधातारं कश्चिद्भजति भजते कश्चन हरिं
सुरानन्यानन्ये जगति सफलास्सर्वविधयः।
तथापि त्वद्भक्तेश्शिव शिव यदा चर्मवदिति
श्रुतो मन्त्रो देवान्तरभजनदैन्यं न सहते॥१४२॥

कश्चित् कश्चित्पशुरित्यर्थः "नानामनसःखलुवैपशवः"। इति श्रुत्यर्थं दर्शयति विधातारं ब्रह्माणं भजति कश्चन हरिं भजते अन्येपशवः अन्यान्पशूनिन्द्रादीन् भजन्ते सर्वविषयः ब्रह्मविष्णवादिदेवताभजनरूपाणि कर्माणि सफलाः फलविशिष्टा एव तथापि। 'यदाचर्मवत्'। इति श्वेताश्वतरशाखायां श्रुतो मन्त्रः त्वद्भक्ते परमपुरुषार्थमोक्षकाङ्क्षया भवद्भजनकारिणि पुरुषे देवतान्तरभजनदैन्यं ब्रह्मविष्णवादिदेवतोपासनदौस्थ्यं न सहते न क्षमते। "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति"। इति। यदाकाशं चर्मवद्वेष्टयितुं शक्यं तदा शिवज्ञानं विना मोक्षो ऽपीति भावः। तथाच वामनपुराणे। "सर्वोपनिषदामर्थश्शिव एव न चापरः। एकमेव हि तद्ज्ञानं तदज्ञानस्य नाशनम्" ॥ १४२ ॥

ईदृग्रूपमिति प्रमाणेन निर्द्धारितवस्तुनि नासंभावना भवति अयं वह्निरुष्ण इति निर्द्धारिते न शीतसंभावनेत्याह—

शशे शृङ्गं पुष्पं नभसि मृगतृष्णासु सलिलं
प्रसूतिर्वन्ध्यायामनवधिमदायुस्तनुभृताम् ।
विमुक्तिर्वा देवान्तरभजनलभ्या पशुपते
न शक्यं नस्संभावयितुमपि सर्वं विमृशताम् ॥

शशे शृङ्गं पुष्पं नभसि मृगतृष्णासु सलिलं वन्ध्यायां प्रसूतिः तनुभृतामनवधिमदायुः यथा संभावयितुमपि संभावनापि

कर्तुं न शक्यं तद्वत् । "ब्रह्मविष्णुरुद्रेन्द्रास्संप्रसूयन्ते न कारणं शंभुः न प्रसूयते शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य"। इति । "यदाचर्मवदाकाशम्"। इति । इत्यादिश्रुतिवाक्यजालं देवान्तराणां जन्ममरणप्रतिपादकवाक्यजालं च सर्वं विमृशतां नः अस्माकं मुक्तिर्देवान्तरलभ्येति संभावयितुमपि न शक्यं नारायणादिभजनलभ्या मुक्तिः विमृशतां नः शशशृङ्गादिकल्पेत्यर्थः ॥ ॥ १४३ ॥

ब्रह्मादीनामप्यस्मदादिवज्जरामरणग्रस्तत्वान्नमुक्तिदायित्वमित्याह—

न भिन्ना नौरन्यानलमुदनिधेरुद्गमयितुं
शिला नैवोन्नेतुं प्रभवति शिलामन्तकरिपो ।
जनित्वा मृत्वा वा जगति परिवर्ती सुरगणः
कथं मे संसारभ्रमणभयभाजस्तु शरणम् ॥

भिन्ना विदीर्णा नौः नौका अन्यान् उदधेः समुद्रात् उद्गमयितुं उत्तारयितुं नालं न समर्था शिला शिलामुन्नेतुं नैव प्रभवति जगति जनित्वा मृत्वा च परिवर्ती सुरगणः संसारभ्रमणभयभाजः संसार परिभ्रमाद्भीतस्य मे मम तु कथं शरणं नेत्यर्थः यो यस्माद्बिभेति स तु तद्भीतिरहितमेवाश्रयेत् तद्यथा मार्कण्डेयो मृत्युभीतस्सन् मृत्युनिर्हरणार्त्थं शिवमेवाश्रितवान् नान्यं तथा गर्भजन्म-

जरामरण संसारमहद्भयाद्भीतः तादृशभयरहितं आश्रितानां तादृशभयध्वंसकं परमेश्वरमेवाश्रयेत् ॥ १४४ ॥

अथात्मनः जन्माभावरूपं वरं परमात्मनः प्रार्थयते—

**देवतान्तरपुनः पुनर्भवं**
**पश्यतः पशुपते भयं मम ।**
**क्रीडतोऽपि तव जन्म मास्मभूत्**
**दीयतामयमपश्चिमो वरः ॥ १४५ ॥**

देवतान्तरपुनःपुनर्भवं नारायणादीनां पुनःपुनरुत्पत्तिं पश्यतो मम भयमुत्पद्यते अतः क्रीडतोऽपि तव जन्म मास्मभूत्। 'स्मोत्तरे लङ् च'। इति लुङ् सर्वापवादत्वेन विधानात्प्रकृते प्रार्थनमर्थः अयमपश्चिमः प्रथमः वरः मह्यं दीयतां नामरूपे जन्मनि भवता लीलया स्वीकृतेऽपि नारायणादिजन्मवत्कर्मनिमित्तशङ्कोदयस्स्यादिति जन्माभावं प्रार्थयते । अजातः । इत्येवं कश्चिद्भीरुः प्रपद्यत इत्यादि श्रुत्यर्थं हृदिकृत्योक्तं अथवा त्वयीति पाटान्तरं देवतान्तरपुनःपुनर्भवं पश्यतः मे भयमुत्पद्यते । अतस्त्वयि विषये क्रीडतोऽपि भक्तिरूपलक्षणमनुसरतोऽपि अनादरेण शाठ्येन परिहासेनापि वा सरतोऽपि जन्म मास्मभूत् अपितु प्रार्थ्यैव मुक्तिः भक्तत्वेनाङ्गीकृतत्वात्त्वयेति भावः ॥ १४५ ॥

आत्मनः शिवभक्तसंसर्गरूपपराशंसनमाह—

वासनापरिगृहीत देवता
 वर्णनौपयिक सर्ववाङ्मयम् ।
धिग्धिगीश्वर जडाशयं जनं
 तावकैरहमसानि सङ्गतः ॥ १४६ ॥

इतरदेवताभजनसंस्कारदेवतान्तरस्तुतियुक्तसमस्तवाग्जालं जडाशयं जडधियं जनं धिग्धिग् पुनःपुनर्निन्दामि अहं तावकैस्त्वद्भक्तैस्सङ्गतो ऽसानि भवानि आशिषि लोट् देवतान्तरभजनपरजनसङ्गत्यभावविशिष्टत्वद्भक्तजनसङ्गतिरस्त्वित्यर्थः ॥ ॥ १४६ ॥

एतस्तोलकरणे त्वद्भक्तिरेव कारणमित्याह—

पांसुकेळिरपि यस्य शैशवे
 शैवपाशुपतपादपांसुभिः ।
स्तोत्रकर्मणि न तस्य मे गुण-
 स्तद्गुणो ऽयमुपपद्यते त्वयि ॥ १४७ ॥

शैशवे बाल्ये पांसुकेळिरपि पांसुक्रीडापि यस्य मे शैवपाशुपतपादपांसुभिरेव कृतेति शेषः तस्य मे स्तोत्रकर्माणि स्तुतिक्रियायां गुणो न भवति अयं तद्गुणः स्तोत्रकर्मगुणः त्वय्येवोपपद्यते ॥ १४७ ॥

स्वरचितस्तोत्रफलरूपं सुषुप्तिरूपसमाध्यवस्थायामीश्वर-साक्षात्कारं दर्शयति—

**स्तोत्रीयमर्थमुपपादितवानहं ते**
**भक्तेति भक्तजनवत्सल भाषमाणः।**
**आविर्बभूविथ शिखी शुचिनाम्बरेण**
**यज्ञोपवीतमुपवीय धृतत्रिपुण्ड्रः ॥ १४८ ॥**

अहं ते स्तोत्रीयं स्तोत्राय हितम्। "तस्मै हितं" इतिछः। अर्थं त्वत्प्रतिपादकश्रुतिपुराणवचनार्थं उपपादितवान् हे भक्तवत्सल शिखी शिखावान् शुचिनाम्बरेण उपलक्षितः धृतत्रिपुण्ड्रः यज्ञोपवीतमुपवीय उपवीतं कृत्वा भक्त इति भाषमाणः आविर्बभूविथ कृतस्मरणे लिट् प्रादुर्भूतः किलासीः इत्यर्थः ॥ ॥ १४८ ॥

प्रसन्नस्य भूतपतेः प्रसादं स्वीकृतवतः आत्मनः तत्स्वीकरणञ्चाह—

**भक्तं भवानदित पार्श्वचरोपनीतं**
**मह्यं महेश्वर पयश्श्रपितं प्रसन्नम्।**
**भुञ्जान एव तदहं झडितिप्रबुद्ध-**
**स्वप्नस्समाधिरिति युक्तधियामभिन्नः ॥१४९॥**

हेमहेश्वर पार्श्वचरोपनीतं भवत्पार्श्वचरेणानीतं पयश्श्रपितं पयःपक्वं पायसं भवानदित दत्तवान् तद्भक्तमहं भुञ्जान एव झटिति प्रबुद्धः स्वप्नोत्थितएव प्रसादं स्वीकृतवानस्मि स्वप्नलब्धस्य पायसस्य कथं प्रबुद्धेन स्वीकार इत्यत आह स्वप्न इति युक्तधियां योगिनां स्वप्नस्समाधिरिति अभिन्नमेकरूपं यथा समाधिलब्धस्य न मिथ्यात्वं तथा स्वप्नलब्धस्यापीत्यर्थः ॥ ॥ १४९ ॥

एतत्स्तोत्राध्ययनफलमाह—

स्तोत्रमेतदवधाय गृह्णता
मर्थमस्य निखिलेन जानताम् ।
ग्राह्यमन्यदपि नावशिष्यते
ज्ञेयमन्यदपि वा न किञ्चन ॥ १५० ॥

अवधाय समाहितचित्ततयावस्थाय एतत्स्तोत्रं गृह्णतां पठतां तस्य स्तोत्रस्य निखिलेन साकल्येनार्थं जानतां पुंसामन्यद्ग्राह्यमपि नावशिष्यते पठनीयमन्यन्नास्ति अन्यदर्थं ज्ञेयमपि वा किञ्चन नास्ति सर्वमप्यधीतञ्च भवतीत्यर्थः ॥ १५० ॥

श्रुतिसूक्तिमालापरिमाणोक्तिपूर्वकं स्तोत्राध्ययनस्य फलान्तराण्याह—

पञ्चाशदुत्तरशता श्रुतिसूक्तिमाला
भोगावळी भुजगराजमनोहरा ते ।
वेदेषु भक्तिमपरागमवैदिकेषु
तन्त्रेषु भक्तिमतुलां त्वयि च प्रसूते ॥ १५१ ॥

पञ्चाशदुत्तरंशतंश्लोकशतं यस्यास्सा पञ्चाशदुत्तरशता भुज-गराजमनोहरा भोगावळी कीर्तिपरंपरा ते श्रुतिसूक्तिमाला श्रुतयो वेदा एव कल्पद्रुमास्तेषां सूक्तय एव कुसुमानि तैर्ग्रथिता माला वेदेषु भक्तिं साङ्गेषु आदरातिशयं अवैदिकेषु सिद्धान्तेषु अपरागं अस्नेहं त्वयि अतुलां च भक्तिं संप्रसूते जनयति ॥ ॥ १५१ ॥

॥ समाप्ता श्रुतिसूक्तिमाला ॥



मिथ्याकल्पितभोगमोक्षदवचस्सन्तानसत्वापन
व्यग्राणामचिरप्रभावविबुधप्रेम्णा महेशद्विषाम् ।
मूर्ध्निष्वेकदुरात्मनां विरचिता निर्घातवाताः परै-
र्विद्वद्भिः परमेश्वरश्रुतिकथातात्पर्यसङ्ग्राहकैः ॥

तत्वप्रकाशिकाख्या व्याख्या शिवलिङ्गभूभुजा रचिता ।
प्रख्यातमेवभक्तिः पुरहरपादाम्बुजार्पिता सततम् ॥

अघटितघटनापटवे प्रकटितकरुणाय गगनसिन्धुभृमे ।
वटतरुमूलस्थितये विघटिततमसे महेश्वराय नमः ॥

॥ समाप्ता चतुर्वेदतात्पर्यसङ्ग्रहाख्या व्याख्या ॥

सर्वं साम्बशिवार्पणमस्तु ॥

श्री ज्ञानसंबन्धस्वामिने नमः ॥

श्री शिवज्ञानयोगिने नमः ॥



ॐ

शिवायनमः

# श्लोकानां वर्णानुक्रमसूची



| श्लोकः | श्लोकसंख्या. | पृष्ठांक. |
|---|---|---|
| | **ऐ** | |
| ऐश्ववर्यमग्र्यमनुपाधिनिबन्धनं | ९ | २१ |
| ऐश्वर्यमग्र्यमनुपाधिमती | २९ | ५१ |
| ऐश्वर्यमीश्वरपद | ३० | ५१ |
| | **क** | |
| कर्मैकमेव न परं | ७४ | १४८ |
| कर्मैव शूलधर | १३ | २७ |
| कल्पाः प्रमाणं | ११२ | २०९ |
| कैरातमीश्वर | १०३ | २०० |
| | **ग** | |
| गव्येन सोम हविषा | ७७ | १५७ |
| गीतासु योगजविभूति | ४३ | ८६ |
| गृह्णातु कामं | ७१ | १४१ |
| | **घ** | |
| घोरान्नमो | ८६ | १६९ |
| घोरा शिवा च | ८५ | १६७ |
| | **च** | |
| चण्डाल चण्डिल | १२६ | २२६ |
| | **त** | |
| तस्मै नमो | १७ | ३४ |
| तुभ्यं नमो | ४८ | १०६ |
| त्वत्कं पुरा मरणतः | ८२ | १६२ |

इति

ॐ

शिवायनमः

# शोधन पत्रम्

| पृष्ठाङ्क | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २ | ५ | इवि | इति |
| | ७ | यस्मै.... जुष्टन्नियुनज्मि | "यस्मै.... जुष्टन्नियुनज्मि" |
| ५ | ५ | ईश्वरः | ईश्वरः" |
| | ६ | पृतगात्मानं | "पृतगात्मानं |
| १५ | ४ | भवितुर्न्नाहति | भवितुन्नार्हति |
| | ६ | कल्पिते | कल्प्यते |
| | १२ | कर्तृकत्वसिद्धिः | कर्तृकत्व सिद्धिः |
| १७ | ९ | महाभारतं | महाभारते |
| | १२ | तस्माच्छश्वतन्त्रोयः | तस्माच्छिवस्वतन्त्रोयः |
| | २१ | कश्वन | कश्चन |
| १८ | १ | सर्वज्ञसर्व | सर्वज्ञस्यसर्व |
| | २० | नत्वेन | नत्वेव |

| पृष्टाङ्क | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| २१ | ६ | नमश्शेपित्वहेतेताम् | नमश्शेषित्वहेतुताम् |
| २२ | ४ | लब्द | लब्ध |
| | २५ | शाश्वदम् | शाश्वतम् |
| २४ | १ | ह्वारि | न्हारिः |
| | १७ | नियन्तृत्वादिका-न्निरभिसन्धिकमेव | नियन्तृत्वादिकन्निर-भिसन्धिकमेव |
| | २० | क्षेत्रज्ञस्सः | क्षेत्रज्ञस्स |
| २५ | १९ | संपपन्ति | संपतन्ति |
| २७ | ७ | किपन्हुवीरन् | किमपन्हुवीरन् |
| | १६ | अर्शादिभ्यो | अर्श आदिभ्यो |
| २९ | १० | विबुंधान्तर | विबुधान्तर |
| ३१ | ४ | गृहीतुं | ग्रहीतुं |
| | ७ | गृहीतुं | ग्रहीतुं |
| | १२ | यं | वयं |
| | १३ | गृहीतुं | ग्रहीतुं |
| ३३ | १४ | अस्तातु | अस्तातुः |
| | १९ | श्रुतिः | श्रुतिः । |
| ३४ | ११ | सर्वावेष्टन | सर्ववेष्टन |
| ३७ | ५ | प्रयत्नवधिष्टेयं | प्रयत्नवदधिष्टेयं |
| | ७ | यतिदं | यदिदं |
| ३७ | २७ | क्रौञ्चमूदन | क्रौञ्चसूदन |

| पृष्टाङ्कः | पंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|
| ३८ | ८ | घूज्य | पूज्य |
| | १३ | विहिदं | विहितं |
| | १८ | यन्नमस्वत् | यन्नमस्तत् |
| ३९ | २ | प्रति | प्रती |
| ८१ | ४ | भागत | भारत |
| | १३ | तत्वं | तत्वं |
| पृष्ठांक | १४१–१४८ | पृष्ठांक | २४१–१४८ |

इति



சைவசித்தாந்த நூற்பதிப்புக் கழக வெளியீடு-௪௰

உ

திருச்சிற்றம்பலம்

---

திருக்கயிலாய பரம்பரைத்

திருவாவடுதுறை யாதீன வித்துவான்

சபாபதி நாவலரவர்கள்

இயற்றிய

சுருதிசூக்தி மாலை யாகிய

# சதுர்வேத தாற்பரிய சங்கிரகம்

திருநெல்வேலி

இந்துகலாசாலைத் தமிழ்ப்போதகாசிரியர்

வி. சிதம்பரராமலிங்க பிள்ளையவர்கள்

எழுதிய

அரும்பொருள் விளக்கத்துடன்

திருநெல்வேலி, தென்னிந்திய

சைவசித்தாந்த நூற்பதிப்புக் கழகம் லிமிடெட்

திருநெல்வேலி :: சென்னை

இரக்தாட்சி௵ ஆவணி௴

# பதிப்புரை

சுருதி சூக்தி மாலை யென்னும் நூல் ஏறக்குறைய ஆயிரம் ஆண்டுகளுக்கு முன் அரதத்த சிவாசாரிய ரால் வடமொழியிலே அருளிச் செய்யப்பட்டது. அது நான்கு வேதங்களானும் முழுமுதற் கடவுளென அறுதியிடப்பட்டவர் சிவபெருமானே யென்பதைத் தொடை விடைகளாற் பல்லாற்றானும் விளக்குவது. அந்நூல் சதுர்வேத தாற்பரிய சங்கிரக மெனவும் பெயர் பெறும். அதற்கு அக்காலத்துச் சோழவரசராகிய சிவலிங்க பூபதியென்பவர் உரை யியற்றினர்.

அந்நூல் சைவசித்தாந்த சந்தானசாரியர் நால்வருள் ஒருவராகிய கொற்றங்குடி உமாபதி சிவாசாரிய சுவாமிகளாலே தாமருளிய பௌஷ்கர வியாக்கியானத் திற் பிரமாணமாக எடுத்தாளப்பட்ட தென்ப. ஸ்ரீ பாஷ்யகாரராகிய மாதவச் சிவஞான சுவாமிகள் தாமரு ளிச் செய்த சிவஞான பாடியம், சிவஞான சித்தி யாருரை, சிவசமவாதவுரை மறுப்பு என்னும் நூல்களில் அந்நூலைப் பெரிதும் போற்றியருளினார்கள். சது ரதிக சதப்பிரபந்த கர்த்தாவும் நீலகண்டமதப் பிரதிஷ்டா குருவுமாகிய அப்பதிக்கிதர் சிவபாரத்து வம் விளக்கியியற்றிய சிவதத்துவ விவேகம், சிவ கர்ணாமிர்தம் என்னும் நூல்களில் அந்நூலையும் அத

ஞசிரியரையும் மிகுந்த நன்கு மதிப்புடன் உதாகரித்திருக்கின்றனர்.

அரதத்த சிவாசாரியர் சரித்திரம் பரமேதிகாசமாகிய சிவரகசியத்திலே ஒன்பதாவது அமிசத்திலே எஙூ சுலோகங்களாலும், பவிஷ்யோத்தர புராணத்திலே சிவபக்த மான்மியத்திலே ருச முதல் கூரு வரையுள்ள பன்னிரண்டு அத்தியாயங்களில் எண்ணூற்றுத் தொண்ணூற்றைந்து சுலோகங்களாலுங் கூறப்பட்டிருக்கின்றது. அச் சரித்திரம், அரதத்தாசாரியர் அந்நூலைச் சிவபிரானது மகிமையைக் கூறிய தம்மோடு வாதஞ்செய்த தம் பிதாவாகிய வாசுதேவர் முதலிய வைணவர்கள் தேறுமாறு அவர்கள் கூறிய வண்ணம் கஞ்சனூர் வரதராஜ சுவாமிசந்நிதியில் பழுக்கக் காய்ச்சிய இருப்பு முக்காலியிலிருந்து அருளிச் செய்து யாதோரிடையூறுமின்றி விளங்கிச் சிவபரத்துவஞ் சாதித்தனரென்று கூறுகின்றது. அந்நூலின் இரண்டாவது சுலோகம் 'வேதேஷ்வா ததநுயாயிஷ்வா விசார்ய தந்த்ரேஷ்வ வாக்ய மகிலம் பிரதிபாதகந்தே। தாத்பர்ய ஸங்க்ரஹமஹம் விததேமஹே சமஹ்யம் ப்ரஸீத நயமாம் ருஜு நாபதாத்வம் ॥ என வருவதும், இறுதிச் சுலோகத்தில் 'அபாரகம் அவைதிகேஷ' என வருவதும் அந்நூல் வாதசம்பந்தமாகச் செய்யப்பட்டதென்பதை வலியுறுத்துகின்றன. மற்று அந்நூலின் பெருமையும் உரையின் பெருமையும் ஆசாரியரின் சரித்திரமும் காலமும்

முதனூலின் முன்னுரையில் விரிவாக எழுதப்பட்டிருத்தல்கொண் டறியலாகும்.

இத்துணைச் சிறப்புவாய்ந்த அந்நூல் வடமொழியிலிருத்தலின் அஃது அம்மொழி வல்லார்க்கே பயன்படுவதாகின்றது. வடமொழிக் கல்வி அருகிவருங் காலநிலையைக் கருதி அந்நூலைப் பல்லோர் தமிழில் மொழி பெயர்த்தார்கள். அவற்றுளெல்லாஞ் சிறந்ததும் முதனூற் பொருளைத் தெளிவுபெற விளக்கித் தமிழ்ச்சுவை ததும்பி நிற்பதும், திருக்கயிலாய பரம்பரைத் திருவாவடுதுறை யாதீனத்து மகாவித்துவானாயிருந்த யாழ்ப்பாணத்து வடகோவைச் சபாபதி நாவலரவர்கள் செய்த மொழி பெயர்ப்பே.

நாவலரவர்கள் தமது மொழி பெயர்ப்பின் முதற் பதிப்பைத் தாது௵ சித்திரை௴ (1876) த்திலும், இரண்டாம் பதிப்பைச் சர்வசித்து௵ மாசி௴ (1887) த்திலும் வெளியிட்டார்கள். இப்பொழுது அம்மொழி பெயர்ப்புச் சுவடிகள் கிடைத்த லரிதாதல்பற்றி யாங்கள் அதனை வெளியிடுகின்றோம். சமயநூற் கல்வி குறைந்துவரும் இக்காலத்தில் அம்மொழி பெயர்ப்பில் வரும் அரும்பொருட் கெல்லாம் விளக்கமெழுதிப் பதிப்பித்தல் நலமென்பது எங்கள் கருத்து. அக்கருத்துக் கிணங்கித் திருநெல்வேலி இந்து கலாசாலைத் தமிழ்ப் போதகாசிரியர் திருவாளர் வி. சிதம்பர ராமலிங்க பிள்ளையவர்கள் எழுதிய அரும்பொருள் விளக்கம் எங்களது இப்புதிய பதிப்பில் சேர்க்கப்பட் டிருக்

கின்றது. அவர்கட்கு யாங்கள் எங்கள் மனமார்ந்த நன்றியைச் செலுத்துகின்றோம்.

சைவநலங் கருதியும் தமிழ்நலங் கருதியும் பல அரிய நூல்களை வெளியிடல்வேண்டு மென்பது எங்கள் விருப்பம். எங்கள் விருப்ப மனைத்தும் இனிது முடியும் வண்ணம் முன்னின்றருளுமாறு எல்லாம் வல்ல சிவபெருமானது திருவடிகளை வழுத்துகின்றோம்.

திருநெல்வேலி.<br>௨௯. ௧. ௭௱௨.

சைவ சித்தாந்த நூற்பதிப்புக் கழகத்தார்.

உ

திருச்சிற்றம்பலம்

# சுருதி சூக்தி மாலையாகிய சதுர்வேத தாற்பரிய சங்கிரகம்

## தற்சிறப்புப்பாயிரம்

மதியணி சடைமுடி வானவ னளித்த
கதிதரு களிற்றின் கண்ணரு ளூறீஇச்
சற்குரு நாதன் பொற்கழல் வணங்கி
வரம்பெறு கலையெலா மொருங்குமுழு துணர்ந்த
விரதத் தாரடி புனைந்த மேலோ
னரதத் தாசா ரியசூ ளாமணி

---

வானவன்-தேவன்: இங்கே சிவபெருமான்.

கதி-மோக்ஷம்.

சற்குருநாதனென்றது திருக்கயிலாய பரம்பரைத் திருவாவடுதுறை யாதீனத்துப் பதினுருவது குருமூர்த்திகளாகிய ஸ்ரீலஸ்ரீ: சுப்பிரமணியதேசிக சுவாமிகளை.

விரதத்தார் அடிபுனைந்த மேலோன்-விரதத்தார் தனது திருவடியைப் புனைந்துகோடற் கேதுவாகிய மேம்பாட்டினையுடையோன்: 'தவரடிபுனைந்த தலைமையோன்' என்றாற்போல. இவ்வாறு பொருள் கோடலைப் 'பொருள் எதுவாகச் சொற்பொருளியம்புத' லென்பர் இலக்கணக் கொத்துநூலார்.

சிவனே பரனெனத் தேறிய யாவரும்
வடமொழி யதனிற் றிடமுற வருளிய
முதிர்போதங் காட்டு முதனூ லான
சதுர்வேத தாற்பரிய சங்கிர கத்தினை
யம்முறை மொழிபெயர்த் தரும்பொரு டோன்றச்
செம்மைசேர் கடாவிடை சேர்கத் தியமாத்
திருந்த நுனித்தெணிச் செய்குவ
னருந்தமிழ் நாவலோ ரறிதரற் பொருட்டே.

---

தேறிய-தேற. யாவருந்தேறிய வென்க.

முதிர் போதம்-முற்றிய ஞான நூல்களின் பொருளொருமை.

சதுர்வேத தாற்பரிய சங்கிரகம் சுருதிசூக்தி மாலையெனவும் வழங்கப்படும்: இதனைப் 'பஞ்சாச துத்தர சதா ச்ருதி ஸூக்திமாலா' என வரும் முதனூலிறுதிச் சுலோகத்தா லறிக.

கடா-வினு. கத்தியம்-உரைச் செய்யுள்.

திருந்த நுனித்தெணி-திருத்தமுறக் கூர்ந்து ஆராய்ந்து.

## சிவவணக்கம்

திருச்சிற்றம்பலம்.

எவன்வணக்கத் தினுக்குரிய ௧
னெவன்குணங்க ளானிறைந்தோ
னெவன்வழிபா டியம்புநா
ராயணமென் னுபநிடத
மெவனுயிர்ப் பிரோரகன்மற்
றெவன்வேள்விக் கெலாமிறைவ
னவனுகு மீசவுனைக்
கதியிலியான் சரணடைந்தேன்.

வேதத்து மற்றதனுக் கவிரோத ௨
தந்திரத்தும் விமல வுன்னைப்
போதிக்கும் வாக்கியங்க ளெவற்றினையு
மறிந்தவற்றுற் போந்த மூட

---

௧. குணங்கள்-அளவிலாற்றலுடைமை முதலிய கல்யாண குணங்கள்: மாயாகுணங்களல்ல.

நாராயணம் என் உபநிடதம்-நாராயணேப நிடதம் இவ்வுபநிடதம் மகோபநிடத மென்றுங் கூறப்படும். (௫௩-வது சுலோகம் பார்க்க)

உயர்ப் பிரோரகன்-அறிவைச் செலுத்துபவன்: அஃதாவது காயத்திரி மந்திரத்தாற் பிரதிபாதிக்கப்படுபவன்.

௨. அவிரோத தந்திரம்-காமிக முதலிய இருபத்தெட்டுச் சிவாகமங்கள். விரோத தந்திரம் - பாஞ்சராத்திரம், வாமம், இலாகுள முதலியன. போந்த தாற்பரிய மென்க.

வாதத்துக் கிடமாகாத் தாற்பரியத்
திணைச்சுருக்கி வகுப்பா னுற்ற
பேதைக்குட் பேதையா மெனக்கருளி
மெய்ந்நெறியிற் பிரேரி யெந்தாய்.

## நூல்

௩ வேதமாவது மந்திரம் அருத்தவாதம் விதிவாக்யமென மூவகைப்பட்டுப், பிறவாக்கியங்களைப் பற்றாது தானே பிரமாணமாகி, விமற்சரார்க் கன்றிப் பிறர்க்கறியப்படாத மெய்ப் பொருளினை
௪ யுடைத்தாய் ஈசுரனையே அறிவிப்பதாம். இனி ஈசுர சத்தம் யோகத்தாற் பிறகடவுளரையு முணர்த்துமேனும், யோகரூடியினுற் சிவபிரானையேயுணர்த்தலின், அஃதவர்க்கே யுரியபெயராம். யோகத்தினும் ரூடி வலியுடைத்தென்பது
௫ மீமாஞ்சை வழக்கெனவறிக. இதுபற்றியன்றே நிகண்டு நூலுடையார் சிவாதி நாமங்கள்போல இதனைச் சிவநாமமாகக் கொண்டோதுவாராயிற்

---

௩ - சு. மந்திரம் - இந்திராய சுவாகா, வருணய சுவாகா என்றூற்போல்வன. அருத்தவாதம்-புனைந்துரை. விதிவாக்கியம் நீராடுக, வழிபடுக என்றூற்போலுஞ் சோதகவாக்கியங்கள்.

மற்சரர்-பிறராக்கத்திற் பொருமையுடையோர்: விமற்சரர்-அஃதில்லாதவர்.

சத்தம் - சொல். யோகம் - காரணப்பெயர். யோகரூடி - காரணவிடுகுறிப்பெயர். ரூடி-இடுகுறிப்பெயர்.

றென்க. அற்றேல், மகேச்சுரன் பரமேசுரனென வொரோவழிப் பிறிதினியைபு நீக்கி விசேடிப் பதெற்றிற் கெனின், மகத் பரம வென்னும் விசேடணங்கள் செஞ்ஞாயிறென்றாற் போலச் சிவபிரானது இயற்கையாகிய வுயர்பினையே குறித்து, இயைபின்மை நீக்குதன்மாத்திரை யின் விசேடிக்க வந்தனவன்றிப் பிறிதினியைபு நீக்கி விசேடிக்க வந்தனவன்றென்க. அற்றேல், அங்ஙனம் விசேடித்துப் பயப்பதின்றெனின், அற்றன்று. பொருளின்கண் உயர்பு இயற்கை ௬ யாக வுள்ளதேனும், விசேடண பதத்தான் விளங்கு மென்பது சத்தநூலார் மதமாகலின், மகத் பரம வென்பன வற்றால் ஈசுரசத்தத் தினது இயற்கையான உயர்பு விளங்கலின் பயனுண் டென்க.

---

யோகத்தினும் ரூடி வலியுடைத்தென்பது 'ரூடிர் யோகமபஹரதி' என்பதனானறிக.

நிகண்டுநூல்-அமர கோசம்.

செந்தாமரை யென்பதிலுள்ள செம்மை வெண்டா மரையை நீக்கித் தாமரையை விசேடிப்பதால் அது பிறிதி னியைபு நீக்கிய விசேடணம்: செஞ்ஞாயிறு என்பதிலுள்ள செம்மை அவ்வாறு நீக்காது ஞாயிற்றை விசேடிப்பதால் அஃது இயைபின்மை மாத்திரை நீக்கிய விசேடணம்.

சத்தநூல் - இலக்கணநூல்: இங்கே குறிக்கப்பட்டது பாணினீயம் உ. க. ௬௧-வது சூத்திரம். அச்சூத்திரமாவது 'ஸந்மஹத்பரமோத்க்ருஷ்டா: பூஜ்யமாநை:' என்பது.

எ இனிக் காணப்படு மிந்தப் பிரபஞ்ச மேசா ரீசுரனாலன்றி நிலையுத லுடைத்தன்று. அவ்வீசுரனும் ஏகனாதலன்றி அநேகனாதலும் பொருத்தமின்று. ஈசுர சத்தவாச்சியத்துவஞ் சிவபிராற் கன்றி ஏனைத் தேவர்க்கின்மையின், லோக வேதாதி கரண நியாயத்தினானே பிரபஞ்சம் அவரானேநிலையுதலுடைத்தென்றலே பொருத்த

அ முடைத்தென்க. சாங்கியரி லொருசாராரும் அவரை யனுவதிக்கும் பிறரும் பிரபஞ்சம் ஈசுரனை யுடைத்தன்றென்றும், யோகநூலாரும் அவரையநுவதிக்கும் பிறரும் அஃதீசுரனை யுடைத்தென்றுங் கூறுப. இஃதென்சொல்லிய வாறோவெனின், பன்மதத்தரு முதல்வன் உண்மை யின்மைகளை ஈசுர சத்தங்கொண்டே விவகரிப்பவென அதன் வழக்கு மிகுதி உலகின்கட் காட்டி ஏதுவை விளக்கு முகத்தான், உலகிற்கு முதலாந் தன்மை சிவபிராற்கே பொருந்து மென்ற மேற்கோளை வலியுறுத்தவாறென்க.

---

எ, அ. லோகவேதாதி கரண நியாயம்-இங்கே லோக மென்பது புராணம்: புராணங்களிலும் வேதத்திலும் உலகந் தொழிற் படுகிற தென்றும் அவ்வாறு தொழிற்படுதல் ஈசுர னாலே யென்றுஞ் சொல்லப்படும் நியாயம்.

சாங்கியம் சேசுரசாங்கியம் நிரீசுரசாங்கிய மெனஇரு வகைப்படும்: சேசுரசாங்கியம் ஆஸ்திகம், நிரீசுரசாங்கியம் நாஸ்திகம்: இங்கே குறிக்கப்பட்ட ஒருசாரார் நிரீசுர சாங்கியஞ் செய்த கபிலர்.

யோகநூலார்-இரணியகருப்பர்.

இவ்வாற்றுற்றலைமையான அபரிச்சின் னைசு- கூ
வரிய முண்மை சிவபிரானுக்கே சித்தித்தலின்,
வணங்கப்படுந் தன்மை அவருக்கே யுரித்தா
மென்க. இதுபற்றியன்றே வேதங்கள் சிவபிரா
னுக்கே பெரும்பான்மையாக வணக்க வாக்கியங்
கள் கூறியதூஉ மென்க. அது சிவபிரானைக் ௰
குறித்துப் பசுநியோசனங் கூறிய "யாவனுக்கு கக
வணக்கம் உரித்தாமோ அவன்பொருட்டு உன்னை
நியோசிப்பேன்" என்னுஞ் சுருதியானும், சிவ
பிரானைத் திப்பியமாகிய சிஞ்சுமாரத்தின் சிர
சென்று கூறிய "எதுவணங்கற்பாற்று அதுசிர
சாம்" என்னுஞ் சுருதியானு மறிக. அஃதேல்,
சிவபிரானை யொழித்தொழிந்த ஏனைத் தேவருக்
கும் வேதத்தில் ஆண்டாண்டு வணக்கங் கூறிய
தென்னையெனின், ஆற்றுநீர் கடலையடையுமாறு
போல ஏனைத்தேவர்மாட்டுக் கூறப்பட்ட வணக்
கங்கள சிவபிரானையே சென்றடைதலின், அங்

---

கூ-கள. அபரிச்சின் னைசுவரியம் -அளவிடப்படாத ஐசு
வரியம்.

பசுநியோசனங் கூறிய சுருதியாவது 'யஸ்மை நமஸ்
தஸ்மை த்வாஜுஷ்டம் நியுநஜ்மி' என்பது.

சிஞ்சுமாரத்தின் சிரசென்று கூறிய சுருதியாவது
'யஸ்மைநமஸ் தச்சிர:' என்பது.

சூலகவமென்னுங் கிரியாவிதி 'அத சூலகவ: ஸம்வத்
ஸரே ஸம்வத்ஸரே மார்க்க சீர்ஷ்யாம் பௌர்ண மாஸ்யாம்
க்ரியேத' என்பது முதல் 'சூலகவோ வ்யாக்யாத எவமேவா

கஉ ஞனங் கூறபட்டதென்க. இவ்விரண்டு சுருதியா
னுஞ் சிவபிரானே வணக்கத்துக்குரியரென்பது
மந்தபுத்தி யுடையார்க்கும் இனிது விளங்கும்.
கந அற்றேல், ஆண்டுப் பசுநியோசனஞ் சிவபிராற்
குரியதென எடுத்தோதாமையானும், "எது
வணங்கற்பாற்று அது சிரசாம்" எனப் பொது
வாற்றாற் கூறியொழிதலானும், இவ்விரண்டு
சுருதிகளானுங் கூறப்பட்டவணக்கங்கள் சிவ
பிரானுடையனவென்றல் அமையாதாம் பிற
கச வெனின், அற்றன்று. ஆண்டுக் கூறப்பட்ட
சூலகவம் என்னுங் கிரியை சிவபிரானுக்கே
உரியதென மந்திரங்களெல்லா முறையிடு
தலானும், ஏனைத்தேவரெல்லாஞ் சிஞ்சுமாரத்
தின் அவயவங்களாகக் கற்பித் தொழிக்கப்
பட்டமையின் எஞ்சி நின்ற சிவபிரானே ஆண்
டுச் சிரசாக வேண்டப்படுவரென்பது பாரி
சேட அளவைபற்றித் துணியப் படுதலானும்
கரு அஃதமைவுடைத் தென்க. இதுபற்றி யன்றே

ஷ்டம்யாம் ப்ரதோஷே க்ரியேதை தாவதேவநாநா. நாத்ரோ
பாகரணம் பசோ:' என்பது வரை போதாயன கிருகிய
சூத்திரத்தில் இரண்டாவது பிரசினத்தின் ஏழாவது அத்தி
யாயத்தில் (கந. கச.) கூறப்பட்டமை காண்க.

ஏனைத் தேவரெல்லாம் சிஞ்சுமாரத்தின் அவயவங்க
ளாகக் கற்பிக்கப்பட்டமை 'தர்மோ மூர்த்தாநம்ப்ரஹ்மோத்
தராஹநுர் யஜ்ஞோ அதராவிஷ்ணுர் ஹ்ருதயம் ஸம்வத்ஸர:
ப்ரஜநநம்' என்று தொடங்கி வரும் மந்திரத்தாலறியப் படும்.

பரதநூலார் இந்திரன், பிரமன், விண்டுவென்னுந் தேவருக்கு முறையே வச்சிரம், கமலம், சங்க மென்னு முத்திரைகளானும், சிவபிரானுக்குச் சிரசில் அஞ்சலி முத்திரையானும், அவிநயங் கூறியதூஉமென்க. இனிப் பிரமன் முதலிய கசு
தேவர் தம்மைக்குறித்துச் செய்யப்படும் வணக் கங்களைத் தமக்கென ஏன்று கொள்ளக் கருதார்; என்னை? சோரனால் வெளவிக் கொணரப்படினும் முடியணி அரசர்க்கே யுரியதாகலின், அதனை எவ னும் ஏன்றுகொள்ளக் கருதான்; கருதுமாயின் அப்பெற்றியான் அரசனா லொறுக்கப்படுத லொ ருதலையாதல்போல அவருஞ் சிவபிரானாலொறுக் கப்படுத லொருதலை யாகலின். அற்றேல், அவர் கஎ

---

பாரதநூலிற் கூறப்பட்ட அபிநயவாக்கியமாவது 'வஜ் ரிண்யாமுத்ரயா சக்ரம் பத்மிந்யா தர்சயேத்விதிம் | சங்கிந்யா கேசவம் ருத்ரம் சிரஸ்யஞ்ஜலி முத்ரயா||' என்பது.

பிரமன் முதலிய தேவர்களைக்குறித்த வணக்க வாக்கி யங்கள் 'நமோ ப்ரஹ்மணே நமோ அஸ்த்வக்நயே நம: ப்ருதிவ் யை நம ஒஷதீப்ய: நமோ வாசே நமோ வாசஸ்பதயே நமோ விஷ்ணவே ப்ரஹதே கரோமி' என்பது முதலியன.

இவையனைத்தும் சிவபிரானையே யடையு மென்பது 'ஸ்தோமம் வோ அத்ய ருத்ராய' என்று தொடங்கும் (ருக் வே, ம. கஉ. க.) மந்திரத்தாலறியப்படும். 'ஆகாசாத்பதிதம் தோயம் யதா கச்சதி ஸாகரம் | ஸர்வ தேவநமஸ்கார: கேச வம் ப்ரதிகச்சதி||' என்பது சாமான்ய மிருதிவசனமே யாத லானும் அவ்வசனம் பிரத்தியக்க வேதத்தான் மறுக்கப்பட லானும் விப்பிரலம்ப வாக்கியம்போல அப்பிரமாணமாம்.

என்றுகொள்ளுமாறு தானென்னையெனின், அவ் வணக்கத்தைச் சிவார்ப்பணஞ் செய்தலே என்று கொள்ளுமா றென்க.

கஅ அற்றேல், சிவபிரானுக்கே நேராகவணக்கங் கூறலமையும், அவர்மாட்டுக்கூறல் வேண்டாவெ னின், அஃதொக்குமன்றாயினும், உடம்பை உயிர் அதிட்டித்து நிற்றல்போல எல்லாப்பொருளையுஞ் சிவபிரான் அதிட்டித்துநிற்றலின், அவ்வியைபு பற்றி, அதிட்டிக்கப்படும் பொருள்கண்மாட்டும் அவர் வணக்கங்கூறப்பட்ட தென்பது. இக்கருத் துப்பற்றி யன்றே திருவுருத்திரத்திற் செடிகளுக் கும், ஞமலிகளுக்கும் ஞமலிகளின் பதிகளுக் கும் வணக்கங்கூறியதூஉம், உலகத்திற் சிவபத் திக்கிழமைபற்றி நராகியசிவனடியார் வணங்கப்

கக படுவதூஉமென்க. இவ்வாற்றாற் சிவபிரானைக்

---

இதன் விரிவை முதனூலிற் பதின்மூவது சுலோக வியாக்கி யானத்திற் காண்க.

கஅ-உக. சிவபெருமான் எல்லாப் பொருளையும் அதிட் டித்து நிற்றலை 'யோ யோநிம் யோநிமதிதிஷ்டத் யேகோ யேநேதம் பூர்ணம் பஞ்சவிதஞ்ச ஸர்வம்' என்னும் சுவேதா சுவதர சுருதியாலும் 'சிவேநாதிஷ்டிதம் ஸர்வம் ஜகதேதச் சராசரம்' என்று தொடங்கிவரும் அதர்வசிரச் சுருதியாலும் அறியப்படும். திருவுருத்திரத்திற் கூறப்பட்ட இவ்விஷயம் ஸ்ரீ சிவஞானபாடியத்தில் கஉ-வது சூத்திரத்து மூன்றுவததி கரண வுரையிற் கூறப்படுதல் காண்க. 'ச்வப்ய: ச்வபதிப்யச் சவோநம:' என்பது திருவுருத்திரம்.

குறித்துச்செய்யப்படும் வணக்கம் ஈசுரத்தன்மை குறிப்பதூஉம் அதனியைபு குறிப்பதூஉமென விருவகைத்தென்பதூஉம், அவற்றுள், முன்னை யது நேராகவும் பின்னையது அதிட்டிக்கப்படும் பொருள்வாயிலாகவுஞ் சிவபிரானை யடைபவென் பதூஉம் போந்தவா றுணர்க. இனிப் பின்னைய உ0
தைச் சிரேட்டம்பற்றிய தென்பாருமுளர். சிரே ட்டமில்லாதனவற்றின்கண் அதிவியாத்திவருத லின், அஃததற்கிலக்கணமாதல் யாங்ஙனமென மறுக்க. அல்லதூஉம் பசுக்களாகிய தேவருக் உக
குப் பதியாந்தன்மைபற்றிச் சிவபிரானுக்குச் சிரேட்டப்பெயர் வழக்குச் சாமவேதத்திற் கிருச் சிரமந்திரத்துட் பொதுவாகவும் வேதத்துள்யாண் டுஞ் சிறப்பாகவுங் கூறப்படுதலின், அதுவும் அவர்க்கேயன்றி ஏனைத்தேவர்க்குச் செல்லாமை யறிக.

சிவபிரானை ஏனைத் தேவரோ டொப்ப வைத்து உஉ
வணங்கலுட், வாழ்த்தலும், வேள்விக்கண் விளி

---

சாமவேதத்தில் சிவபெருமானுக்குச் சிரேட்டப்பெயர் கூறப்படுவதை 'நமோஜ்யேஷ்டாய ச்ரேஷ்டாய' என்னுங் கிருச்சிராதிகரணத்தில் படிக்கப்படுதலான் அறிக.

உஉ-உச. சிவபிரானைப் பொதுநீக்கி வழிபடல் வேண்டு மென்பதை 'மாத்வா ருத்ர சுக்ருதாமா நமோபிர்மா துஷ்டு தீவ்ருஷபமா ஸஹூதீ உந்நோவீரா அர்பய பேஷஜேபிர் பிஷக்தமம்த்வா பிஷஜாம் ச்ருணோமி' (ருக்வே உ. ௩௩. ௪.) என்னும் மந்திரத்தானும்'பொது நீக்கித்தனைநினைய வல்லார்க்

த்தலு நன்றாகாவென்க. புத்திரகாமேட்டிக் கண்
அவிசமைப்பிற் சோமதேவதையோடு உருத்
திரன் ஒருங்கு விளிக்கப்பட்டமை வேதத்திற்
கேட்கப்படுதலின் அது பொருந்தாதெனின்,
அறியாது கடாயினாய். ஆண்டுச் சோமதேவதை
யோடு விளிக்கப்பட்ட உருத்திரன் சிவபிரானல்
உங லர்; அக்கினியே. அது, ஆண்டைப் பிராதரக்கி
னிம் என்னுஞ் சூக்தத்திற்றானே சிவபிரானுக்கு
விளி வேறாகக் காணப்படுதலினான், இனிது
உச விளங்குதலி னென்க. அச் சூக்தத்திற் சிவபிரா
னுக்கு விளி வேறாகக் காணப்படுதல் எற்றாற்
பெறுது மெனின், அம்மந்திர சம்பந்தத் தகுதி
யுடைத்தாய் நிகழ்த்தாநின்ற கிரியாபதத்தை
யொழித்துச் சிவபிரானது விளிக்கண் வேறு
கிரியாபதம் பிரயோகித்தமையாற் பெறுதுமென்
பது. இவ்வாசங்கை யொழித்தற்கன்றே ஏனைத்
தேவரை விளித்த மந்திரங்கட்குஞ் சிவபிரானை
விளித்த மந்திரங்கட்கும் இடையே “உத”
என்னும் பதந்தலைப்பெய்ததூஉ மென வுணர்க.

---

கென்றும், பெருந்துணையை' (திருநாவு. கோயிற்றிருத்தாண்டகம்) என்னும் திருவாக்கானும் அறியப்படும்.

பிராதரக்கினிம் என்னும் சூக்தமாவது:— ‘ப்ராதரக்னிம் ப்ராதரிந்த்ரம் ஹவாமஹே ப்ராதர் மித்ரா வருணா ப்ராதரச்வினா ப்ராதர்பக பூஷணம் ப்ரஹ்மணஸ்பதிம் ப்ராதஸ்ஸோமமுத ருத்ரம் ஹுவேம' என்னும் மந்திரம்.

அற்றேலஃதங்ஙனமாக; ஆண்டு உருத்திர உருபதம் அக்கினியை உணர்த்தற்குப் பிரமாணமென்னை யெனின், கூறுதும். முன்னோர் காலத்திற் றேவர்கட்கும் அசுரர்கட்கும் பூசனிகழ்ந்தது. அப்போழ்து தேவர் தந் தனத்தைப் பாதுகாக்க அக்கினிமாட்டு வைத்தனர். வைக்கப்பட்ட தனத்தைஅக்கினி அபகரித்துக்கொண்டனன். அதுபற்றியவர் அவனை வலிசெய்யலுற்ழிறு அவன் ரோதனஞ்செய்தனன். அதனான் அக்கினிக்கு உருத்திரப் பெயர்வழக்கு உண்டாயிற்றென் றறிக. அஃதேல், மருத்துக்களுக்குஞ் சிவகணங்கட்கும் உருத்திரப் பெயர் வழங்குமா றென்னையெனின், உருத்திரனினின்றுந்

---

உ௰ரு-உ௰அ. அக்கினிக்கு உருத்திரப்பெயர் வந்ததை 'தேவாஸுராஸ் ஸம்யத்தா ஆஸந்தே தேவா விஜய முபயந்தோ அக்னௌ வாமம்வஸு ஸந்ந்யததே இதமுநோ பவிஷ்யதி யதி நோ ஜேஷ்யந்தீதி ததக்நிர்ந்ய காமயத தேநாபாக்ராமத்தத்தேவா விஜித்யா வருருத்ஸமாநா அந்வாயந் ததஸ்ய ஸஹஸாதித்ஸந்த ஸோரோதீத்யதரோ தீத்தத்ருத்ரஸ்ய ருத்ரத்வம்' என்பதனானறிக. இது கந்தபுராணத்துத் தக்ஷகாண்டத்தில் ததீசியுத்தரப் படலத்திலும் விவரிக்கப்பட்டிருத்தல் காண்க.

மருத்துக்களுக்கு உருத்திரப்பெயர் வரக்காரணமும் அப்பெயர் வழக்குண்மையும் 'ஆதேபிதர் மருதாம் ஸும்நமேது (ருக்வே உ. ௩௩. க.) என்னும் மந்திரத்தானும் 'ஆருத்ராஸ இந்த்ரவந்த:' (ருக்வே. ரு. ௫௭. க.) என்னும் மந்திரத்தானும் அறியப்படும்.

தோன்றினமையின் அவர்க்கும் அப்பெயர் வழக்கு உண்டாயிற்றென்க. சிவபிரானுக்கோ வெனின், உயிர்களுக்கு ஸம்ஸாரரோகத்தை
உசு யொழித்தற்காரணத்தால் அப்பெயருடைமை யாயிற் றென்க. யசுர்வேதத்தில் ஆருணமென் னுஞ் சாகையில் யாகத்திற்கும் உருத்திரப்பெயர் கேட்கப்படுமெனின், ஒரு பொருட் பெயர் அத னோடியையுடைப் பிறிதுபொருட்கும் ஆகுநெறி யுண்மையின், உருத்திரனோ டியையுடைத்தாய
உஎ யாகத்திற்கு அஃது ஆகுபெயராயிற் றென்க. தாபத்தை உயிர்க்கு விளைத்து அவை இரங்கச் செய்தலின், சுரத்திற்கும் அப்பெயர்வழக்கு

சிவகணங்கட்கு உருத்திரப் பெயருண்மை 'ஸஹஸ்ராணி ஸஹஸ்ரசோ யே ருத்ரா அதிபூம்யாம்' என்னு மந்திரத்தா லும், சிவபெருமான்பால் தோற்றரவுண்மை 'ப்ரஜாஸ்ஸ்ரு ஜேதி நிர்திஷ்டச் சந்த்ரமௌளிர் விரிஞ்சிநா | ஸஸர்ஜ மநஸா ருத்ராநாத்ம துல்யாந் மஹேச்வர: | நீலகண்டாம் ஸ்த்ரிணேத்ராம்ச்ச ஜடாமகுட மண்டிதாந் | 'என்னும் ஆதித் தியபுராணவசனத்தாலும் அறியப்படும்.

சிவபெருமானுக்கு உருத்திரப்பெயர் உயிர்களின் சம் ஸார ரோகத்தை யொழித்தலால் வந்ததென்பதனை 'ருத்துக் கம் துக்க ஹேதுர்வா தத்ராவயதி ய: ப்ரபு: | ருத்ர இத்யுச் யதே தஸ்மாச் சிவ: பரமகாரணம் | 'என்னும் புராணவச னத்தா னறிக.

ஆருணகேதுக மென்னுஞ் சாகையில் யாகத்திற்கு உரு த்திரப் பெயர் வழக்குண்மை 'ஏதத்ருத்ரஸ்ய தநு:' என்று தொடங்கும் மந்திரத்தாலறிக.

உண்டு. ரௌத்திரமோவெனின், அஃதும் அத னைப் பகுதியாகவுடைய தத்திதமென்க. அல் உஅ லதூஉம், வாயசம், பாகவதன், சாத்துவதனென் றற் றொடக்கத்தனபோற் றத்திதபதப் பிரதிரூப மெனினுமமையும்.

ஐசுவரியம், வீரியம், புகழ், திரு, ஞானம், உகூ வைராக்கிய மென்னுமாறும் பகமெனப்படு தலின், இவை சிவபிரானுக்கே யுண்மையின், அவரே பகவனெனப்படுவர். அற்றேல், இவை நடு யாறுஞ் சிவபிரானுக்கு உள்ளனவென்பதற்குப் பிரமாண மென்னையெனின்;—அவர்க்கு ஐசுவரிய முண்மைக்கு ஈசுரபதச் சுருதியும், வீரியமுண் மைக்கு உக்கிரபதச் சுருதியும், புகழுண்மைக் குச் சிவபதச் சுருதியும், திருவுண்மைக்கு இரு க்குவேதமும், ஞானமுண்மைக்குச் சருவஞ்ஞ சுருதியும் வைராக்கிய முண்மைக்குக் காமரிபு பதச் சுருதியும் பிரமாணமாமென்க. “திருவி நக னிற் சிரேட்டர்” என்றும், “திருவை யெய்தும் பொருட்டுச் சிவபிரானது விசித்திர ரூபமாகிய

---

சுரத்திற்கு உருத்திரப் பெயருண்மை ‘ருத்ர: கலு வை வாஸ்தோஷ்பதி:’ எனவரும் மந்திரத்தாலறியப்படும்.

நக. ‘திருவினிற் சிரேட்டர்’ எனவரும் மந்திரமாவது ‘ச்ரேஷ்டோ ஜாதஸ்ய ருத்ர ச்ரியாஸி தவஸ்தமஸ்தவஸாம் வஜ்ரபாஹோ’ (ருக்வே. உ. நந. ந) என்பது.

திருவை யெய்தும் பொருட்டுச் சிவபிரானது விசித்திர

லிங்கந் தேவராற் பூசிக்கப்பட்டது'' என்றும்
இருக்குவேதங் கூறலின், ஈண்டுத் திருவெனப்
௩௨ பட்டது பொருட்டிரு வன்றென்க. வாய்மை,
பொறை, தைரியம், அதிட்டித்தல், ஆன்ம
போதம், சிருட்டித்தல், ஆசையின்மை, தவம்,
புத்தி, ஈசுரத்துவ மென்னுந் தசகுணங்
களும் தருமமுஞ் சிவபிரானுக்கே யிவை
௩௩ வன. இனி ஐசுவரியமுடையார், பெரும்புக
ழுடையார், வீரர், செல்வர், அரசர், சக்கிர
வர்த்திகளென்று மிவரையும் இன்னோரன்ன
வியல்புடைய பிறரையும் பகவப்பெயரான் வழங்
கார். மெய்யுணர்ந்து அவாவறுத்தார்கட் சிவம்
பிரகாசித்தலுண்மையின், அவரைப் பகவப்
பெயரான் வழங்குப.

௩௪ அற்றேலஃதாக; பகவப் பெயர் சிவபிரானுக்
குரியதென்பதற்கு எடுத்தோத் துண்டோ

---

ரூபமாகிய லிங்கந்தேவராற் பூசிக்கப்பட்டது' என்னும் மந்திரமாவது:—'தவ ச்ரியே மருதோ மர்ஜயந்த ருத்ர யத்தேஜநிம சாரு சித்ரம் | பதம்யத்விஷ்ணோருபமம் நிதாயி தேந பாஸி குஹ்யம் நாமகோநாம்' (ருக்வே. ரு. ௩. ௩) என்பது.

௩௪. அதர்வசிரோபநிடதத்தில் மகாதேவாதி நாமங்களுடன் பகவநாமமும் கூறப்படுதலை 'அதகஸ்மாத் உச்யதே பகவாந் யஸ்ஸர்வா நபாவா நக்ஷதயாத்மஜ்ஞாநம் நிரீக்ஷயதி யோகம் கமயதி தஸ்மாதுச்யதே பகவாந்' என்னு மந்திரத்தா னறிக.

திருமால் பெருமை கூறும் புராணம் பாகவத மெனப் படுதலின் திருமாலே பகவப் பெயருடையானெனின், சிவ

வெனின்;—அதர்வணவேத முடையார் சிவ நாமங்களுட் பகவநாமங் கூறுதலானும், சுவே தாச்சுவதரோ பநிடதஞ் சிவபிரானையே "பகே சன்" எனக் கூறுதலானும் எடுத்தோத்துண் டென்க. நிகண்டு நூலுடையார் பூசிக்கப்படுங் குணமுடையானையே பகவனென்ப.

இனி மனுஇத்திரயத்தானுஞ் செயப்படும் ௩௫ பூசை சிவபிரானுடையதே, திரு உருத்திரத் தோடு ஓதப்படும் "அவனேத்துதி" என்னு மந் திரத்தான் விதிக்கப்பட்டமையின். அன்றியும், உபநிடதங்களெல்லாஞ் சிவோபாசனை செயற்பாற் றென முறையிடுகின்றன. அவற்றுள், நாராய ணோப நிடதம்பற்றிச் சிவோபாசனையை ஆராய்கு ௩௬ தும். நாராயணோபநிடதத்திற் கூறிய உபாசனை ௩௭ சிவோபாசனை யென்பதூஉம், அதன்கட் கூறிய

---

பிரானுக்குப்போலத் திருமாலுக்கு அப்பெயர் வேதபடித மன்மையின் அது பொருந்தாது. சுவேதாசுவதரோப நிடதத்தில் சிவபிரானைப் பகேசனென்று துதிக்கும் மந்திர மாவது:—'ஸ வ்ருக்ஷகாலாக்ருதிபி: ப்ரோ அந்யோ யஸ்மாத் ப்ரபஞ்ச: பரிவர்ததேயம் | தர்மாவஹம் பாபநுதம் பகேசம் ஜ்ஞாத்வா த்மஸ்தமம்ருதம் விச்வதாம||' (சுவேதா. ௬. ௬) என்பது. இம்மந்திரத்து வரும்|பகேச மென்பதை இக்காலத் தொரு சாரார் பவேச மெனத்திருத்திப் பிழைபட்டனர்.

௩௫-௩௬. மனுஇத்திரயத்தானுஞ் செய்யப்படும் பூசை சிவபிரானுடையதே என்பதை விதிக்கும் மந்திரமாவது:— 'தமுஷ்டுஹி ய: ஸ்விஷு: ஸுதந்வா யோ விச்வஸ்ய க்ஷயதி

